

**चन्दमामा** सम्पुटः - २१ जून् - २००५ सञ्चिका - ६



# अन्तरङ्गम्



## एतस्य अङ्कस्य विशेषाः

















**ग्राहकशुल्कम्** -

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिकं शुल्कं - $२०

भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -


**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony,

Ekkatuthangal, CHENNAI - 600 097

E.mail : subscription@chandamama.org


**ग्राहकशुल्कविवरणम्**

वायुयानेन भारतेतरदेशान् प्रति

**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**

भारते रू. १४४/- (बुक्पोस्ट् द्वारा)

भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा

'Chandamama India Limited' नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -


**चेन्नै** - *शिवाजी,* Ph - 044-22313637/22347399

Fax: 044-22312447, Mobile: 98412-77347

email : advertisements @ chandamama.org

**देहली** - OBEROI MEDIA SERVICES, Telefax (011) 22424184

Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com



संस्थापकौ -
चक्रपाणिः, बि.नागिरेड्डिः च

# भारतस्य मैत्रीसम्बन्धः

शान्तिः इत्येतत् पदं परमसुन्दरम् । यत्र शान्तिः तत्र भवति आनन्दमयः परिसरः । यत्र मैत्री भवति तत्रैव शान्तिः भवितुम् अर्हति । मैत्र्याः अभावे सङ्घर्षमयं वातावरणं सृष्टं भवति । देशयोः देशानां वा मैत्री तु शान्तिपरिसरस्य प्रमुखं कारणम् ।

भारतं भाग्यशालि, यतः, यः आ बहोः कालतः शत्रुताम् एव चिन्तयन् आसीत् सः पाकिस्थानदेशः इदानीं मैत्रीहस्तं प्रसारितवान् दृश्यते । भारतम् आगतः तद्देशस्य अध्यक्षः मुशरफः भारतात् निर्गमनात् पूर्वम् उक्तवान् यत् उभयदेशयोः सीमावासिनः अन्यदेशवासिभिः बान्धवैः सह मेलनाय अवकाशं प्राप्नुयुः, उभयोः अपि देशयोः मैत्री वर्धेत इति ।

अस्माकम् अपरः प्रतिवेशी चीनदेशः अपि शान्तिसन्धिप्रस्तावम् उपस्थापितवान् दृश्यते । अन्ये शक्तिशालिनः देशाः अपि एशियादेशानां विषये स्वदृष्टिं परिष्कुर्वन्तः दृश्यन्ते । तस्मात् भारतविषये अपि तेषां दृष्टिः परिवृत्ता स्यादेव ।

भारतस्य महाप्रजाप्रभुत्वोपेतता, आर्थिकस्थिरता, अभिवृद्धिपरता च जगता दृष्टा अस्ति । अस्माकम् आर्थिकताभिवृद्धेः वेगः विकासोन्मुखः अस्ति । शक्तिशालिराष्ट्रत्वेन विकसत् अस्ति भारतम् ।

काश्चन शक्तयः भारतस्य स्थिरताम् ऐक्यं च विनाशयितुं प्रयतमानाः सन्ति इत्यपि सत्यमेव । अस्माकं युवजनता अखण्डताविषये बद्धादरा, स्वार्थसाधिकानां शक्तीनां प्रभावेण अस्पृष्टा च स्यात् । अद्यतनाः युवानः एव भाविनि काले भविष्यन्ति राष्ट्रस्य भव्योदर्कनिर्मातारः ।

*सम्पादकः* - विश्रम्





वाचकानां कृते कथास्पर्धा (नवम्बर्) - परिणामः

# राजधर्मः



राजा राजवर्मा अवदत् - ''एकैकस्य एकैकं कर्तव्यं भवति । ग्रामस्य रक्षणं ग्रामरक्षकस्य कर्तव्यम् । लुण्ठाकः तत्र विघ्नं कृतवान् । अतः तस्य ग्रहणं कृतं ग्रामरक्षकेण । एवं ग्रामरक्षकः स्वस्य कर्तव्यं कृतवान् । कर्तव्यं कृतवते पुरस्कारः दातव्यः नास्ति । तथापि ग्रामरक्षकः महालुण्ठाकम् एव गृहीतवान् इत्यतः अहं तस्मै सुवर्णाङ्गुलीयकं दत्तवान् । कर्तव्यपालनस्य प्रोत्साहनार्थं मया तथा कृतम् । अन्यच्च, ग्रामरक्षकः पुरस्कारेच्छया तत् कार्यं कृतवान् । अतः सामान्यं पारितोषिकं तस्मै ।''

''शिक्षकः छात्राणां गुरुः । यः व्यवहारेण कर्तव्यम् उपदिशति सः एव श्रेष्ठः । शिक्षकः यद्यपि सामान्यपदवीस्थः, तथापि तस्य मनः विशालम् अस्ति । चोरग्रहणसमये सः न चिन्तितवान् यत् चोरं गृहीत्वा मयैव पारितोषिकं प्राप्तव्यम् इति । सर्वान् आहूय चौर्यविवरणं करणीयम् इत्येव तस्य चिन्तनम् आसीत् । फलापेक्षा तस्य सर्वथा न आसीत् । तस्य धैर्यं, बालके प्रीतिः, क्षिप्रनिर्णयः इत्यादयः प्रशंसार्हाः आसन् । अतः एव मया तस्मै वज्रहारः दत्तः । मम दृष्ट्या सर्वे समानाः । पक्षपातम् अहं स्वप्ने अपि न चिन्तयामि । तत्तस्य योग्यतायाः अनुगुणं मया जनाः पुरस्क्रियन्ते दण्ड्यन्ते वा । एषः एव राजधर्मः नाम'' इति ।

राज्ञः एतत् वचनं श्रुत्वा सर्वे सभासदः नितरां तृप्ताः जाताः । ते बहुधा राज्ञः प्रशंसां कृतवन्तः ।

सि.वि.आर्.आर्.एस्. शर्मा
s/o एस्.एस्. शर्मा, इन्द्रपल्लि, अमलापुर मण्डल,
प.गो. जिल्ला (आ.प्र.) - ५३३ २२१



# मनुष्यस्य शापः

प्रतापः श्रमजीवी । गृहस्य उद्याने केचन कदलीवृक्षाः आरोपिताः आसन् तेन । यदा कदलीफलानि पक्वानि भवन्ति तदा तानि नगरं नीत्वा तेषां विक्रयणं करोति सः । एकवारं कदलीविक्रयणं क्रियते चेत् शतं रूप्यकाणि प्रायः प्राप्यन्ते तेन । कदाचित् नगरं गत्वा कदलीफलानि विक्रीय गृहं प्रत्यागतं पुत्रं माता उक्तवती – ''कदलीफलानि अद्य अल्पेन एव कालेन विक्रीतानि इति मन्ये'' इति ।

प्रतापस्य पत्नी विमला पातुं जलम् आनीय पत्युः हस्ते ददती उक्तवती – ''श्वः पुत्राणां शालायाः शुल्कं दातव्यम्'' इति ।

''मासपर्यन्तं कृतस्य परिश्रमस्य फलम् एतानि एव शतं रूप्यकाणि । जीवने कष्टानि न समाप्यन्ते एव । अहो, मम दौर्भाग्यम्'' इति कथयन् प्रतापः आत्मना आनीतं धनं पत्न्याः हस्ते स्थापितवान् ।

तदा माता पृष्टवती – ''वत्स ! किम् एतत् ? किमर्थम् एवम् असन्तोषः ?'' इति ।

''पित्रा यत् अकार्यं कृतं तत् दृष्ट्वा मया किं सन्तोषः अनुभोक्तव्यः आसीत् ?'' इति क्रोधयुक्तेन स्वरेण पृष्टवान् प्रतापः ।

तदा आश्चर्यचकिता माता पृष्टवती – ''भवतः पिता तु दशभ्यः वर्षेभ्यः पूर्वमेव दिवं गतः । अद्य किमर्थं तस्मै कुप्यति भवान् ?'' इति ।

''मातः ! यत् पूर्वं जातं तत् सर्वम् अपि भवत्या अवगतमेव । पितुः मित्रं नरसिंहः पञ्चदशभ्यः वर्षेभ्यः पूर्वम् अत्र ग्रामे स्थितं क्षेत्रादिकं विक्रीय नगरं प्रति गतः । तेन पिता अपि बोधितः आसीत् – 'भवान् अपि एवम् एव करोतु' इति । किन्तु मित्रस्य सूचनाम् अगणयन् पिता ग्रामे एव अवसत् । नरसिंहः तु नगरं गत्वा वाणिज्यं कुर्वन् प्रभूतं धनं सम्पादितवान् । अस्माकं तु शोचनीया स्थितिः यत् अल्पं क्षेत्रम् अस्ति ततः आगतेन आयेन



अस्माभिः पञ्चभिः जनैः जीवनं यापनीयम् । पिता अपि यदि वाणिज्यम् अकरिष्यत् तर्हि वयम् एवं कष्टपरिस्थितिं न अनुभूतवन्तः स्याम'' इति उक्तवान् प्रतापः ।

तदा दीर्घं निश्श्वस्य माता उक्तवती – ''एतत् सर्वं विधेः अधीनम् । भगवता यावत् दीयते तावता एव सन्तोष्टव्यम्'' इति ।

''अम्ब ! अलं वैराग्ययुक्तैः वचनैः । नरसिंहस्य पुत्रः गोविन्दः अहं च समान-वयस्कौ । सः सुखेन जीवति अद्य । सः अद्य नगरे मिलितवान् । नगरग्रामयोः मध्ये स्थिते अरण्ये निवसन्तम् ऋषिवरं द्रष्टुं शकटेन आगच्छन् आसीत् । मध्येमार्गं मां दृष्ट्वा सः प्रीत्या शकटे उपवेशितवान् । तस्य धनिकत्वं दृष्ट्वा स्वस्य निर्धनत्वं च स्मृत्वा अहं नितरां खिन्नः अस्मि'' इति स्वस्य दारिद्र्यविषये असहनां प्रकटयन् उक्तवान् प्रतापः ।

पुत्रस्य कटुवचनानि श्रुतवती माता निर्वचना अभवत् । तस्यां रात्रौ पत्नी विमला पतिम् अवदत् – ''भवता अपि सः योगीश्वरः कुतो वा न द्रष्टव्यः ? कदाचित् तस्य अनुग्रहेण अस्माकं जीवने अपि परिवर्तनं जायेत'' इति ।

प्रतापाय पत्न्याः एषा सूचना अरोचत । अतः सः परेद्यवि प्रातरेव ऋषिवरस्य दर्शनाय गतवान् । योगीश्वरः प्रतापं दृष्ट्वा प्रीत्या उक्त-वान् – ''पुत्र ! भवान् जीवने महत् दुःखम् अनुभवन् अस्ति इति भासते । का व्यथा बाधते भवन्तम् ?'' इति ।

तदा प्रतापः स्वस्य कष्टस्थितिं श्रावयित्वा दुःखेन उक्तवान् – ''भवतः भक्तः गोविन्दः पूर्वम् अस्मद्ग्रामीणः एव आसीत् । तस्य पिता महाधनिकः आसीत् । अतः अद्य सुखेन जीवति सः । मम पिता मह्यं कामपि सम्पत्तिं न दत्तवान् । अतः अहं जीवने महत् कष्टम् अनुभवन् अस्मि'' इति ।

एतत् श्रुत्वा ऋषीश्वरः हसन् उक्तवान् – ''जीवने चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च । भवतः पिता भवते कीदृशं धनं दत्तवान् इति भवता न ज्ञातम् । तेन दत्तम् अस्ति आरोग्यरूपं धनम् । अतः एव भवान् श्रमेण जीवनं कुर्वन् पूर्णोदरं भुङ्क्ते । भवतः गृहे सर्वेऽपि भवति प्रीतिमन्तः सन्ति । इतोऽपि श्रेष्ठं भाग्यं किमन्यत् स्यात् ? तथापि भवति असन्तोषः उत्पन्नः अस्ति मित्रस्य दर्शनात् । गोविन्दस्य विचारः सम्यग् ज्ञायते चेत् भवतः मनसि जातः असन्तोषः दूरं गच्छेत्'' इति ।

''कष्टं शब्दमात्रेणापि न जानाति

सः । तस्य जीवनं सुखमयम्'' इति उक्तवान् प्रतापः ।

''वस्तुस्थितिः तथा नास्ति । सम्पदः प्राप्तेः अनन्तरम् बहवः रोगाः तम् आवृण्वन् । मधुरं न खादनीयम् । लवणस्य उपयोगः न करणीयः । अधिकं दूरं चलितुमपि न शक्यते । वाणिज्ये जायमानेन परिवर्तनेन निद्रा अपि न प्राप्यते । औषधार्थं, मनश्शान्त्यर्थं च सः असकृत् अत्र आगच्छति । यदि भवता इष्यते तर्हि क्षणाभ्यन्तरे अहं भवन्तं कोटीश्वरं कुर्याम् । वर्तमानं शान्तं जीवनम् आवश्यकम् उत अशान्त्या युक्तं कोटीश्वर-जीवनम् इति भवता एव निर्णयः करणीयः'' इति वदता ऋषीश्वरेण स्वस्य हस्तः प्रतापस्य शिरसि स्थापितः । प्रतापस्य नेत्रे क्षणं पिहिते ।

प्रतापः वृद्धः सन् भवनस्य एकस्मिन् प्रकोष्ठे पर्यङ्के शयानः अस्ति । भवने सर्वत्र सेवकाः । पुरतः मधुराणि फलानि, स्वादु भोजनं च । किन्तु श्रान्त्या सः उत्थातुमपि न शक्नोति । कष्टेन उत्थितः सः स्थातुम् अशक्नुवन् भूमौ अपतत् । साहाय्यार्थं तेन माता पत्नी च आहूते । ते सेवकं वदतः – 'तस्य साहाय्यं क्रियताम्' इति ।

''मास्तु । मास्तु । एतादृशं जीवनम् अहं न इच्छामि'' इति आक्रोशन् प्रतापः नेत्रे उद्घाटितवान् । पुरतः स्थितं हसन्तम् ऋषीश्वरं पश्यन् सः उक्तवान् – ''भवान् मयि सद्बुद्धिम् उत्पादितवान् । कोटीश्वरस्य कष्टानि मह्यं न अपेक्षितानि । मम तु तादृशी पत्नी एव अपेक्षिता, या सुखे दुःखे च आधाररूपेण तिष्ठेत् । सा एव माता अपेक्षिता, या माम् इदानीं प्राणेभ्योऽपि अधिकं मनुते । तौ उभौ पुत्रौ एव भवतां, ययोः मुखदर्शनेन इदानीं मम सर्वा श्रान्तिः नष्टा भवति'' इति ।

''पुत्र । सन्तृप्तिः, स्वास्थ्यम्, आनन्दः च जीवने सर्वदा भवेयुः । एतेषु असत्सु सम्पदां स्थित्या अपि न किमपि प्रयोजनम् । असूया सदा शापायते । मित्रस्य गोविन्दस्य दर्शनेन भवति असूया उत्पन्ना आसीत् । सौभाग्येन इदानीं सा अपगता । इतः परं भवान् गृहे सानन्दं वासं कर्तुम् अर्हति'' इति उक्त्वा ऋषिवरः प्रतापम् आशीर्वादेन अनुगृहीतवान् ।

प्रतापः सविनयम् ऋषीश्वरं नमस्कृत्य सन्तुष्टः सन् गृहं प्रत्यागतः ।





# अशुभचिन्तनस्य फलम्

बालाः सर्वे यथापूर्वं शीघ्रं भोजनं समाप्य सावित्रीं परितः उपविश्य उक्तवन्तः - ''पितामहि ! कथां कथयतु'' इति ।

तदा रघुनामकः बालः उक्तवान् - ''पितामहि ! अन्येषाम् अशुभचिन्तनस्य फलम् अशुभमेव इति कथयन्ति । मम पितामहः पितरं वदन् आसीत् यत् अचलपतेः परिस्थितिः अपि एवमेव अभवत् इति ! किन्तु मया अस्य वचनस्य तात्पर्यं न अवगतम् । भवती तद्विषये वदतु'' इति ।

पितामही रघुं प्रीत्या पश्यन्ती उक्तवती - ''अस्मिन् लघुनि एव वयसि एतादृशे वचने अवधानं दीयते इति तु प्रशंसायोग्यः विषयः ! 'अन्येषाम् अनिष्टं क्रियते चेत् अनिष्टमेव प्राप्यते' इति तस्य तात्पर्यम् । एतम् एव विषयम् अधिकृत्य एकां कथां कथयामि । श्रद्धया शृण्वन्तु'' इति । ततः तया कथा आरब्धा -

पूर्वं प्रवृत्ता घटना एषा । मुङ्गेरनामके ग्रामे केशवो नाम कश्चन कृषिकः निवसति स्म । तेन सह तदीया पत्नी, चत्वारः पुत्राः, माता पिता च आसन् । केशवस्य गृहे स्थिताः सर्वेऽपि कस्मिंश्चिदपि कार्ये निरताः भवन्ति स्म एव इति कारणात् तस्य गृहस्य सदस्याः सुखेन वसन्ति स्म, ऋणमुक्ताः च आसन् ।

केशवस्य गृहस्य पुरतः श्यामस्य गृहम् आसीत् । केशवस्य सुखि कुटुम्बं दृष्ट्वा असूयति स्म श्यामः । श्यामस्य ज्येष्ठा पुत्री सीता, केशवस्य ज्येष्ठा पुत्री लक्ष्मीः च समवयस्के । ते उभे अपि विवाहवयस्के च ।

कदाचित् प्रातःकाले एव केशवस्य गृहस्य पुरतः अश्वयानमेकम् आगत्य अतिष्ठत् । यानस्य दर्शनेन ज्ञायते स्म यत् तत् यानं कस्यचन धनिकस्य इति । केशवस्य दूरबन्धुः माधवः पत्नीपुत्रैः सह यानात् अवतीर्णः । सप्तभ्यः वर्षेभ्यः पूर्वं कार्यविशेषस्य निमित्तं माधवः अत्र आगत्य दिनद्वयं वासं कृतवान्

आसीत् । तस्मिन् दिने केशवस्य कुटुम्बेन कृतः सत्कारः तस्मै अरोचत, तेन सः आकृष्टः च । केशवस्य पुत्री लक्ष्मीः पति-पत्न्योः प्रिया अभवत् । लक्ष्म्याः बुद्धिमत्ता एव तत्र कारणम् । तद्दिने एव तौ दम्पती निश्चितवन्तौ यत् लक्ष्मीः एव अस्मत्पुत्रस्य वधूः इति । तदर्थमेव ते सर्वे पुनः अत्र आगताः ।

श्यामः एतं विषयं ज्ञातवान् । वरदक्षिणां विना लक्ष्म्याः विवाहः लक्षाधीशेन सह भविष्यति इति विषयं सोढुं न अशक्नोत् सः । असूया तस्य मनसि प्रविष्टा । सः मनसि एव निश्चितवान् – 'कथमपि एषः विवाहः मया स्थगनीयः एव' इति ।



सः केशवस्य गृहं गत्वा माधवं कुशल-प्रश्नान् पृष्ट्वा गृहम् आनीय उक्तवान् –''माधव-महोदय ! केशवः सज्जनः । तस्य पुत्री अपि अतीव सुन्दरी एव । किन्तु तत् सौन्दर्यम् उदुम्बरफलमिव निष्प्रयोजकम् । यतः सा लक्ष्मीः अपस्माररोगेण पीडिता । एतं विषयम् अनुक्त्वा वञ्चनया विवाहं निर्वर्तयितुं ते उद्युक्ताः । विवाहः एव अस्य औषधम् इति वैद्यः प्रायः उक्तवान् स्यात्'' इति ।

एतत् श्रुत्वा नितरां खिन्नः माधवः तद्दिने एव सकुटुम्बं प्रतिगन्तुम् उद्युक्तः । श्यामस्य पार्श्वगृहे स्थितः भूषणः माधवस्य प्रतिगमनस्य कारणं ज्ञातवान् । सः धनपिशाचग्रस्तः । श्यामस्य असूयां धनरूपेण परिवर्तयितुं सः एकां योजनां रचितवान् ।

सः श्यामं रहस्यस्थले मिलित्वा उक्तवान् – ''लक्ष्म्याः भाग्ये विवाहः न लिखितः । त्यजतु तं विषयम् । अहं भवतः पुत्र्यै कञ्चन वरं दृष्टवान् अस्मि । तस्य नाम गोविन्दः इति । मातापितृविहीनं तं पितामही एव पालितवती । तस्याः समीपे महती सम्पद् अस्ति । किन्तु सा तां सम्पदं तदा एव पौत्राय दातुम् इच्छति यदा च किञ्चित् मूलधनं संस्थाप्य पौत्रः वाणिज्यं कुर्यात् । गोविन्दः वाणिज्ये समर्थः एव । किन्तु वाणिज्यार्थं तस्य समीपे मूलधनं नास्ति । अतः वरदक्षिणारूपेण दश-सहस्रं रूप्यकाणि गोविन्दः इच्छति, येन धनेन वाणिज्यं कर्तुं शक्येत'' इति ।

भूषणस्य एतत् वचनं श्यामे आशाम् अजनयत् । 'दशसहस्ररूप्यकमात्रं दत्तं चेत् धनिकः जामाता लप्स्यते, तेन यदि वाणिज्यम् आरप्स्यते तर्हि पितामह्याः सम्पत्तेः अधिकारी अपि सः भविष्यति एव' इति आसीत् तस्य चिन्तनम् ।

अतः सः झटिति एव भूषणस्य सूचनाम् अङ्गीकृतवान् । भूषणः सप्ताहाभ्यन्तरे एव सीतागोविन्दयोः मेलनं कारितवान् । किन्तु एषः विषयः अन्येन केनापि न ज्ञातः । सीतां दृष्ट्वा सन्तुष्टः गोविन्दः स्वस्य अङ्गुलीयकं सीतायै उपायनत्वेन दत्तवान् । श्यामः महान्तम् आनन्दं सम्प्राप्य पूर्वनिश्चयानुगुणं दशसहस्रं रूप्यकाणि गोविन्दाय दत्तवान् अपि ।

गोविन्दः प्रतिगतः । दिनत्रयानन्तरं प्रातरेव माधवः केशवेन सह श्यामस्य गृहम् आगतः । कुशलवाक्यानि कानिचन उक्त्वा माधवः श्यामं पृष्टवान् - ''सीतागोविन्दयोः विवाहः कदा निश्चितः ?'' इति ।

श्यामः एतत् न ऊहितवान् आसीत् एव । यतः गृहे प्रवृत्तं कोऽपि अन्यः जानीयात् इति कल्पना अपि न आसीत् तस्य ।

तदा माधवः हसन् उक्तवान् - ''भवता दत्तस्य धनस्य विभागः कथं करणीयः इति विषये गोविन्दभूषणयोः कलहः आरब्धः । अकस्मात् मया तेन मार्गेण गतम् इति कारणात् सर्वं ज्ञातम् । मम विचारणेन ज्ञातं यत् गोविन्दः परमवञ्चकः, भूषणः तस्य साहाय्यं कुर्वन् भवन्तम् अस्मिन् जाले पातितवान् इति । इदानीं तौ कारागृहे स्तः'' इति ।

श्यामः लज्जया अवनतशिरस्कः जातः । तदा माधवेन पृष्टं - ''श्याम ! इदानीं वदतु- लक्ष्म्याः विषये भवान् यत् उक्तवान् तत् सत्यमेव किम् ?'' इति ।

तदा श्यामः क्षीणध्वनिना उक्तवान् - ''न । अहम् असत्यम् उक्तवान्'' इति ।

''अत एव भवता एतादृशं दण्डनं प्राप्तम् । पण्डिताः वदन्ति किल 'अन्येषां विषये यत् अशुभचिन्तनं क्रियते तस्य फलम् अस्माभिः एव अनुभोक्तव्यम् इति' । इतः परं पार्श्वगृह-जनानां विषये एवम् असूयां, द्वेषं वा मा करोतु'' इति माधवः तं बोधितवान् ।

कथायाः समाप्त्यनन्तरं पितामही बालान् उक्तवती - ''पश्यन्तु बालाः । वञ्चकः श्यामः कथं दण्डनं प्राप्तवान् इति । स्वेन निर्मिते जाले स्वयमेव पतितवान् सः । तेन तदीयं धनमपि नष्टम्, अपमाननपि प्राप्तम् । अत एव न उच्यते अस्माभिः कदाचिदपि एतादृशं चिन्तनं न करणीयम् इति'' इति ।

''अस्तु आर्ये'' इति अवदन् ते बालाः ।





# भल्लूकमान्त्रिकः

## १८

*[मायामर्कटः राजधान्याः उपरि आपतन्तीम् आपदं जितकेतुं श्रावितवान् । शत्रुगणे कश्चन राक्षसः अपि अस्ति इति ज्ञातवान् राजा जितकेतुः मायामर्कटं स्वस्य प्रधानमन्त्रिणं कृतवान् । मन्त्री जीवगुप्तः खड्गं गृहीत्वा मायामर्कटं संहर्तुम् इष्टवान् । किन्तु मायामर्कटः उपायेन तदीयं खड्गं वशीकृत्य स्वस्य खड्गम् उन्नीय अग्रे गतवान् तस्य संहाराय । तदनन्तरम् ...]*

यदा मायामर्कटः खड्गम् उन्नीय जीवगुप्तं हन्तुम् उद्युक्तः तदा राजसभायां हाहाकारः उत्पन्नः ।

राजा जितकेतुः अग्रे गत्वा मायामर्कटस्य हस्तं गृहीत्वा खड्गप्रहारात् तं निवारयन् अवदत् – ''अये मर्कटामात्य ! अलं त्वरया । राजसभायां रक्तस्य पातनात् देशस्य हानिः भवेत् । मया जीवगुप्तस्य मरणदण्डनं विहितम् अस्ति एव । तस्य निर्वर्तनं करिष्यति नगरस्य प्रधानवधकः । एषः अस्माकं देशस्य नियमः'' इति ।

राज्ञः मुखात् एतत् श्रुत्वा मायामर्कटः खड्गं कोषे स्थापितवान्, जीवगुप्तं पश्यन् अवदत् च – ''अये भूतपूर्वमन्त्रिन् ! राज्ञः कथनात् मया तूष्णीं स्थीयते । आसन्नं मरणं दैवकृपया अपगतम् । तथापि एतस्मिन् देशे स्थातुं सर्वथा अनर्हः भवान् । अतः एतस्मिन् एव क्षणे भवता एतत् राज्यं परित्यज्य गन्तव्यम्'' इति ।



जीवगुप्तः भूमौ पतितं खड्गम् उन्नीय कोषे स्थापयित्वा राजानं पश्यन् – ''महाराज ! भवता मम शिरश्छेदः आज्ञापितः । किन्तु एषः मर्कटः मां देशात् बहिष्कृतवान् अस्ति । परस्परं विरुद्धम् एतत्'' इति उक्त्वा सभासदः पश्यन् उच्चैः अवदत् – ''हे प्रमुखाः नगरवासिनः ! इदानीं मया किं करणीयम् इति भवन्तः एव निर्णयन्तु'' इति ।

राज्ञः आज्ञायाः समर्थनं न कृतं चेत् राजा असन्तुष्टः स्यात्, समर्थिता चेच्च नूतनः मन्त्री मायामर्कटः कुपितः भवेत् । अतः ते मौनेन स्थितवन्तः आसन् ।

तावता सामन्तः सूर्यभूपतिः सभाभवनं प्रविश्य जितकेतुं प्रणम्य अवदत् – ''महाराज ! मम नाम सूर्यभूपतिः इति । एतदवसरे जीवगुप्ताय क्षमादानम् एव उचितं स्यात् । यत् आक्रमणं प्रवर्तिष्यते तत्र उदयगिरेः राजा दुर्मुखः अपि भागी अस्ति । अतः राजधान्याः रक्षणाय झटिति अवधानदानं वरं स्यात्'' इति ।

राजा जितकेतुः दुर्मुखस्य नाम्नः श्रवणात् आश्चर्येण स्तब्धः । सः दूरे स्थितं नगररक्षकदलस्य प्रमुखं स्वसमीपम् आहूय अवदत् – ''भवता झटिति एव नगरद्वारं पिधाय शत्रूणां प्रवेशः निवारणीयः । प्रधानसेनापतिं मम आज्ञां श्रावयतु यत् सेनां सज्जीकृत्य दुर्गपरिखादीनां रक्षणाय योग्या काचित् व्यवस्था करणीया इति'' इति ।

''यथाज्ञापयति महाराजः'' इति वदन् दुर्गरक्षकः दलपतिः ततः निर्गतवान् ।

एतदनन्तरं जितकेतुः सूर्यभूपतिं पश्यन् अपृच्छत् – ''अये, किं भवता दुर्मुखस्य आक्रमणस्य स्वरूपं स्पष्टतया ज्ञायते ? किं तस्य सेना अतिमहती अस्ति ?'' इति ।

तदा सूर्यभूपतिः चिन्तापूर्णेन स्वरेण अवदत् – ''महाराज ! अहम् आ बहोः कालात् राज्ञः दुर्मुखस्य सामन्तः आसम् । सः राज्यशासनाय असमर्थः इति ज्ञात्वा अहं विद्रोहेण राज्यशासनाधिकारं स्वायत्तीकृतवान् । एतस्मिन् विषये दुर्मुखस्य बहवः सैनिकाः मम सहयोगं कृतवन्तः । किन्तु कालीवर्मा नाम क्षत्रिययुवकः, भल्लूकमान्त्रिकः, भल्लूकरूपेण स्थितः कश्चन जनः, लुण्ठाकाः केचन, कश्चन राक्षसः च सम्भूय आक्रमणं कृतवन्तः । तस्मात् तत् राज्यं हस्तच्युतं जातम् । किन्तु दुर्मुखेन सह न सन्ति बहवः, न वा अस्ति महती सेना'' इति ।

एतत् श्रुत्वा मायामर्कटः सकृत् कूर्दित्वा अवदत् – ''राजन् ! दुर्गस्य रक्षणम् आदौ चिन्तनीयम् इति तु युक्तम् एव । भल्लूकमान्त्रिकः तदनुयायिनः च सूर्यभूपतेः दुर्गं कथं प्रविष्टवन्तः इति किं भवता ज्ञायते ? ते दुर्गद्वारम् अग्निना दग्ध्वा अन्तः गतवन्तः । अतः दुर्गरक्षणं विशेषमहत्त्वम् अर्हति इत्यत्र नास्ति एव सन्देहः'' इति ।

एतत् अङ्गीकुर्वन् राजा जितकेतुः सूर्यभूपतिम् अवदत् – ''सूर्यभूपते ! भवता स्वस्य दुर्गस्य रक्षणाय अधिकम् अवधानं न दत्तम् । अतः तत् शत्रुवशं गतम् । इदानीम् अहं मम दुर्गस्य रक्षणभारं भवते यच्छन् अस्मि । यदि भवता एतत् दायित्वं समर्थतया निरूह्येत तर्हि भवान् मम प्रथमः सामन्तः भवितुम् अर्हति । यथायोग्यं पुरस्कारः अपि दास्यते मया भाविनि काले'' इति ।

एतत् श्रुत्वा मायामर्कटः कीच्कुर्वन् उक्तवान् – ''अये, जीवगुप्त ! भवतः पदं तु हस्तच्युतम् एव । दैवात् शिरश्छेदः किञ्चित् अग्रे गतः । भवता पुनः आस्थाने पदं स्थापनीयं नास्ति'' इति ।

एतदनन्तरं सूर्यभूपतिः, जीवगुप्तः, अन्ये नगरप्रमुखाः च सभाभवनात् बहिः आगतवन्तः ।

सर्वे यावत् प्राङ्गणं प्राप्तवन्तः तावता मायामर्कटः वेगेन सोपानानि आरुह्य हस्तेन खड्गं गृहीत्वा भ्रामयन् अघोषयत् – ''मम मन्त्रदण्डः केनापि चोरितः अस्ति । यः तं मन्त्रदण्डम् अन्विष्य आनीय मह्यं ददाति तस्मै अर्धराज्यं दास्यति महाराजः । स्वकन्याम्



अपि तस्मै दास्यति सः'' इति ।

मायामर्कटस्य वचनं श्रुत्वा जनाः आश्चर्यचकिताः जाताः । जीवगुप्तः उपहासपूर्वकम् अवदत् – ''एषः मर्कटः एतदपि न जानाति यत् राज्ञः कन्या किं, सन्तानः एव नास्ति इति'' इति ।

मन्त्रिणः मुखात् एतत् वचनं श्रुत्वा जनाः उच्चैः हसितवन्तः ।

मायामर्कटः राजानं क्रोधेन पश्यन् अपृच्छत् – ''अये राजन् ! कीदृशः राजा भवान् ! किं कोऽपि सन्तानः एव सर्वथा नास्ति भवतः ?'' इति ।

''मर्कटामात्य ! तद्विषये अहम् अनन्तरं वदिष्यामि । आदौ भवान् वदतु यत् किं सः मन्त्रदण्डः तथा महत्त्वपूर्णः ? किं सः इदानीम् अत्यावश्यकः ? तं विना किं शत्रवः जेतुं



सर्वथा न शक्याः अस्माभिः ?'' इति माया-मर्कटम् अपृच्छत् राजा ।

''राजन् ! मन्त्रदण्डविषये सर्वथा अज्ञः भवान् । सः एव भवतः सिंहासनं, प्राणान् च रक्षितुं समर्थः अस्ति, न अन्यः'' इति अवदत् मर्कटः ।

राजा जितकेतुः हस्तम् उन्नीय अवदत् - ''मम कन्या नास्ति इति केनापि चिन्तनीयं नास्ति । काञ्चित् कन्यकाम् अहं दत्तकरूपेण स्वीकरिष्यामि । अतः मन्त्रदण्डस्य आनेत्रा कन्या अर्धराज्यं च प्राप्स्यते इत्यत्र न कोऽपि सन्देहः'' इति ।

एतत् वचनं श्रुत्वा सर्वे हर्षनादं कृतवन्तः । एतावता वन्ययुवकस्य भल्लूकस्य क्रीडाः द्रष्टुं बहवः जनाः तत्र उपस्थिताः आसन् । तेषु उभौ विरागिवेषधारिणौ अपि अन्यतमौ । राज्ञः घोषणं श्रुत्वा तौ नितरां प्रहृष्टौ । तयोः अन्यतरः स्वस्य हस्तं वस्त्रग्रन्थौ स्थापयितुम् इष्टवान् । तदा अपरः तं निवारयन् - ''अये ! अलं त्वरया । आदौ गुरुवर्यस्य आशयः ज्ञातव्यः अस्माभिः'' इति अवदत् ।

नगरप्रमुखाः राजानम् अवदन् यत् मन्त्र-दण्डस्य आनेत्रे पुरस्कारः दास्यते इत्येषः विषयः समग्रे देशे सडिण्डिमघोषम् उद्घोषणीयः इति । सर्वे यावत् ततः निर्गन्तुम् उद्युक्ताः तावता कश्चन बाणः वेगेन तत्र आगतः, जनानां पुरतः अपतत् च ।

कश्चित् तं बाणम् उन्नेतुं यावत् उद्युक्तः तावता मायामर्कटः - ''मा स्पृशन्तु तम्'' इति उद्घोषयन् वेगेन गत्वा तं बाणम् उन्नीय दन्तैः भञ्जयित्वा दूरे क्षिप्त्वा - ''मया एतस्य बाणस्य या गतिः कल्पिता सा एव गतिः भविष्यति शत्रूणाम् अपि'' इति उक्त्वा उच्चैः पुनः अपृच्छत् - ''मम मन्त्रदण्डः क्व गतः ?'' इति ।

अत्रान्तरे कश्चन महान् शिलाखण्डः दुर्ग-भित्तिम् अतिक्रम्य आगत्य भित्त्या घट्टितः सन् भूमौ अपतत् । शिलाघट्टनतः भित्तेः हानिः जाता ।

राजा जितकेतुः नूतनाम् एतां विपदं दृष्ट्वा नितरां भीतः ।

सः आश्चर्यम् अनुभवन् - ''एतं महा-शिलाखण्डं बहिर्भागतः क्षेप्तुं सर्वथा न शक्नोति कोऽपि मानवः । राक्षसः एव एतत् कर्तुम् अर्हति'' इति उक्त्वा मायामर्कटम् उद्दिश्य पुनः अवदत् - ''मर्कटामात्य ! वयं मानवाः किम् एतेन राक्षसेन सह युद्धं कृत्वा सजीवं

स्थातुम् अर्हेम ? राक्षसः तु महाबलशाली भवति एव'' इति ।

महाशिलायाः पतनं दृष्ट्वा भीताः नगर-प्रमुखाः, सामान्याः जनाः च ततः भीत्या पलायनं कृतवन्तः ।

मायामर्कटः राज्ञि धैर्यं पूरयन् अवदत् - ''राजन् ! अलं चिन्तया ! ब्रह्मपुत्रखातप्रदेशे निवसति महाशक्तिशाली मम गुरुः मिथ्या-मिश्रवर्यः । तस्य आधीन्ये बहवः राक्षसाः सन्ति उद्योगित्वेन । तेषां सामर्थ्यं यदि पश्येम तर्हि अयं राक्षसः वस्तुतः मशकायते !'' इति ।

तदा राजा अवदत् - ''एवं तर्हि तेषु कांश्चन अत्र आनाय्य शत्रून् संहृत्य भवान् मम राज्यं रक्षतु कृपया'' इति ।



एतत् श्रुत्वा उच्चैः हसन् मायामर्कटः अवदत् - ''राजन् ! कीदृशी मूर्खता भवतः ? तान्त्रिकसार्वभौमः सः मम गुरुः भवादृशं सामान्यं राजानं रक्षितुं स्वस्य सेवकान् किं प्रेषयेत् ? सः स्वस्य मन्त्रतन्त्रशक्त्या आदौ एतं लोकं जेतुम् इच्छति । ततः ऊर्ध्वलोकम् अपि जेतुं प्रयतिष्यते सः । किन्तु भल्लूकपादः नाम कश्चन तुच्छः जनः तस्य प्रयत्ने विघ्नम् आचरन् अस्ति । तस्य शिष्यः कश्चन इदानीं दुर्गात् बहिः तिष्ठति'' इति ।

मायामर्कटस्य मुखात् एतत् श्रुत्वा राजा अचिन्तयत् - 'एतौ उभौ अपि तान्त्रिकौ अपूर्व-शक्तेः सम्पादनाय अस्मादृशान् जनान् सर्वान् क्रीडनकानि इव उपयुञ्जानौ स्तः । तयोः अन्यतरस्य शिष्यः अस्ति अयं मायामर्कटः । अतः एतस्य अवधानं मम सिंहासनरक्षणे नास्ति, प्रत्युत भल्लूकमान्त्रिकस्य संहारे अस्ति । मम दुर्गस्य रक्षणस्य दायित्वं मया स्वयं निरूढं चेदेव वरं स्यात् । एतस्मिन् विश्वासः आत्मघातकः एव स्यात् । मया एतदवसरे जागरूकेण भाव्यम्' इति ।

एवं चिन्तयित्वा सः मायामर्कटम् अवदत् - ''मर्कटामात्य ! दुर्गभित्तिम् आरुह्य अस्माभिः द्रष्टव्यं यत् शत्रवः दुर्गात् कियद्दूरे सन्ति इति, सर्वैः सावधानैः स्थातव्यम् इति सैनिकाः आदेष्टव्याः च'' इति ।

एतावत् उक्त्वा राजा दुर्गभित्तिम् आरोढुम् उद्युक्तः जातः । 'अहो, मम मन्त्रदण्डः क्व गतः' इति वदन् मायामर्कटः तम् अनुसृत-वान् ।

राजा जितकेतुः मायामर्कटः च दुर्गभित्तिम् आरुह्य परितः सर्वत्र दृष्टिं प्रसारितवन्तौ ।

अश्वारोही कालीवर्मा, वृषभारूढः भल्लूकमान्त्रिकः, गजारूढः वधकभल्लूकः, राक्षसः उग्रदण्डः, केचन सैनिकाः च ताभ्यां दृष्टाः दुर्गद्वारसमीपे ।

तान् दृष्ट्वा महतीं भीतिम् अनुभवन् राजा अवदत् - ''हे अमात्यवर्य ! अन्येभ्यः मम अधिका भीतिः तु सर्वथा नास्ति । किन्तु तत्र कश्चन घोरः राक्षसः दृश्यते खलु ! तस्य दर्शनमात्रेण एव नितरां कम्पते मम शरीरम् । मानवः कोऽपि तं पराजेतुं किं शक्नुयात् ?'' इति ।

''प्राज्ञाः वदन्ति यत् मानवमात्रेण यत् साधयितुं न शक्यं तत् मन्त्रशक्त्या साध्यते इति । मन्त्रशक्त्या अपि यत् साधयितुं न शक्यते तत् तन्त्रशक्तिः साधयिष्यति इति पण्डिताः वदन्ति । किन्तु एतस्य सर्वस्य मूलम् अस्ति मम मन्त्रदण्डः । सः एव न दृश्यते खलु इदानीम् !'' इति वदन् मायामर्कटः इतस्ततः समचरत् ।

दुर्गभित्तेः अपरस्मिन् पार्श्वे स्थितः भिल्लतरुणः मायामर्कटस्य एतत् कथनं श्रुतवान् । सः गजस्य उपरि स्थित्वा स्वस्य बाणं मायामर्कटं लक्ष्यीकृत्य गृहीत्वा उच्चस्वरेण - ''अये मूर्ख वानर ! भवता मन्त्रदण्डः इष्यते खलु ? सः इदानीं मया बाणरूपेण भवत्समीपं प्रेषयिष्यते । भवत्समीपम् आगतः सः बाणः क्षणाभ्यन्तरे भवतः प्राणान् अपहरिष्यति । अतः सावधानः भवतु भवान्'' इति उक्त्वा एकं बाणं वेगेन प्रेषितवान् । स च बाणः सशब्दम् आगत्य मायामर्कटस्य पादे लग्नः जातः ।

बाणप्रहारं प्राप्य मायामर्कटः अधोमुखतया अपतत् । किन्तु क्षणमात्रेण एव 'जय गुरुवर्य !' इति वदन् सः उत्थाय अतिष्ठत् ।

बाणं हस्तद्वयेन आकृष्य शरीरात् अपनीय - ''अये ! किं भवतः एषः बाणः भ्रान्तमतिं मां पीडयितुम् अर्हति ?'' इति क्रोधपूर्णेन स्वरेण वदन् सः तं बाणं कालीवर्मभल्लूकमान्त्रिकयोः दिशि क्षिप्तवान्, कीचूकुर्वन् - ''अहो, मम मन्त्रदण्डः क्व गतः ?'' इति उच्चैः अवदत् च ।

- *(अनुवर्तते)*






# वेताल-कथा

## अपस्वर-ब्रह्मा

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखास्थं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितः । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! न जाने, भवान् स्वस्य कार्यस्य व्यर्थतां कदा अवगमिष्यति इति । भवान् राजा सन् प्रजाः पालयिष्यति चेदेव वरम् । किन्तु मम सन्देहः यत् तदवसरे अपि भवान् शिवशास्त्री इव स्वस्य निर्णयं परिवर्तयेत् इति । शिवशास्त्री उच्चकोटिकः सङ्गीतविद्वान् आसीत् । शिष्यस्वीकारविषये तेन कठोराः नियमाः पाल्यन्ते स्म । किन्तु अन्ते तेनापि स्वनिर्णयः परिवर्तितः । भवतः ज्ञानाय अहं तस्य कथां विस्तरेण श्रावयामि । श्रद्धया



श्रृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

शिवशास्त्री कश्चन श्रेष्ठः सङ्गीतविद्वान् । 'स्वरब्रह्मा' इत्येतेन बिरुदेन भूषितः आसीत् सः । सः सर्वान् सङ्गीतं न पाठयति । शिष्यत्वम् इच्छतां परीक्षां सम्यक् कृत्वा कश्चित् एकमेव सः शिष्यत्वेन स्वीकरोति स्म च ।

एतादृश्यां परीक्षायां गोविन्दः मुकुन्दः चेति उभौ चितौ जातौ । उभयोः अपि ज्ञानं क्षमता च समाने । अनयोः कतरः स्वीकरणीयः इति शिवशास्त्री निर्णेतुं न शक्तवान् । अतः सः तौ अवदत् - ''दिनद्वयानन्तरम् अहम् अन्यां परीक्षाम् आयोजयिष्यामि । तत्र उत्तीर्णं शिष्यत्वेन स्वीकरिष्यामि च'' इति ।

गुरोः प्रशंसां प्राप्तुं गोविन्दः निरन्तरम् अभ्यासम् आरब्धवान् । मुकुन्दः तु गुरुपत्नी-समीपं गत्वा उक्तवान् - ''अम्ब ! अध्ययन-काले पार्वतीपरमेश्वररूपिणोः भवतोः सेवा अपि करणीया इति मम इच्छा । अतः परीक्षायाम् उत्तीर्णतां प्राप्तुं कमपि उपायं भवती वदतु कृपया'' इति ।

तदा गुरुपत्नी उक्तवती - ''भवतः गुरुः सामर्थ्यस्य योग्यतायाश्च प्राशस्त्यं चिन्तयति । अन्येन मार्गेण शिष्यत्वं प्राप्तुम् इच्छन्तं कदाचिदपि शिष्यं न करिष्यति सः । मधुरः कण्ठस्वरः सङ्गीतक्षेत्रे प्रमुखः भवति इति भवान् जानाति एव । एतस्मिन् ग्रामे सहदेवः नाम कश्चन वैद्यः अस्ति । मधुरस्य कण्ठ-स्वरस्य निमित्तम् औषधं ददाति सः । अतः तं पश्यतु भवान्'' इति ।

मुकुन्दः सहदेवसमीपं गत्वा स्वस्य इच्छां प्रकटितवान् । तदा सहदेवः उक्तवान् - ''भोः, मधुरस्य कण्ठस्वरस्य सज्जीकरणाय अधिकः अभ्यासः आवश्यकः । मम औषधम् अत्र सहायकं भवितुम् अर्हति । किन्तु तदेव अधिकतया सेव्यते चेत् स्वरः अपस्वरतां यास्यति'' इति ।

''अभ्यासं तु अहं करिष्यामि एव । एतस्य औषधस्य निमित्तं कियत् धनं दातव्यम् ?'' इति अपृच्छत् मुकुन्दः ।

तदा सहदेवः हसन् अवदत् - ''बहवः मम औषधस्य सेवनं कृतवन्तः एव । किन्तु औषधसेवने परिमाणम् अजानन्तः अपस्वरतां प्राप्य सङ्गीतक्षेत्रात् ते दूरं गताः । अतः औषधस्वीकारविषयं परित्यज्य साधनामार्गेण कण्ठस्वरस्य मधुरतासम्पादनं वरम्'' इति ।

किन्तु मुकुन्दः तस्य कथनं निराकृतवान् ।

''भवान् यावत् धनम् इच्छति तावत् दातुम् अहं सिद्धः'' इति अवदत् सः । ततः धनं दत्त्वा औषधं क्रीतं तेन । औषधं किञ्चित् यदा पीतं तदा कण्ठस्वरः सुमधुरः जातः । सन्तुष्टः सः स्वस्य कण्ठस्वरम् इतोऽपि मधुरतरं कर्तुम् अधिकम् औषधं पीतवान् ।

परीक्षादिनम् आगतम् । आदौ गोविन्दः अगायत् । परीक्षकाणां प्रशंसा प्राप्ता तेन । अनन्तरं मुकुन्दः गानम् आरब्धवान् । तस्य स्वरमाधुर्यं दृष्ट्वा शिवशास्त्री सानन्दम् अवदत् - ''साधु ! भवतः गानस्य श्रवणात् मया धन्यता प्राप्ता'' इति ।

एतेन वर्धितोत्साहः मुकुन्दः अग्रिमस्य चरणस्य आलापनं कर्तुम् उद्युक्तः । तदा झटिति अपस्वरः उद्गतः । शिवशास्त्री तस्य गानं स्थगयन् अवदत् - ''स्वस्य कण्ठस्वरस्य परिवर्तनाय भवता सहदेवेन दत्तस्य औषधस्य सेवनं कृतम् । एतस्मात् स्वरः तु सुमधुरः जातः । किन्तु औषधसेवनम् अधिकतया कृतम् इत्यतः चरणानाम् आलापनसमये अपस्वरः श्रूयते । भवान् सङ्गीताभ्यासं कर्तुम् अनर्हः । अतः प्रतिगम्यताम् इतः'' इति ।

''गुरुवर्य ! मम अपराधः क्षन्तव्यः । सङ्गीतविद्वत्तां प्राप्तुं कमपि उपायं सूचयतु कृपया'' इति वदन् मुकुन्दः शिवशास्त्रिणः पादौ गृहीतवान् ।

शिवशास्त्री तम् उत्थापयन् अवदत् - ''निरन्तराभ्यासात् सङ्गीतशास्त्रे निपुणता सेत्स्यति इति वचनं श्रूयते । अतः भवान् अधिकाधिकतया अभ्यासं करोतु । तेनैव इष्टं सिद्ध्येत्'' इति ।



मुकुन्दः निराशः सन् ग्रामं प्रतिगतवान् । सः यदा गानस्य अभ्यासम् आरब्धवान् तदा जनाः तस्य विरोधं कृतवन्तः । सः पार्श्वग्रामं गत्वा तत्र गानाभ्यासम् आरब्धवान् । तत्रत्याः अपि एतस्य विरोधं कुर्वन्तः उक्तवन्तः - ''वयं भवतः अपस्वरस्य श्रवणे असमर्थाः । भवान् इतः निर्गच्छतु कृपया'' इति ।

एतस्मात् नितरां खिन्नः मुकुन्दः अरण्यं गतवान् । तत्र कस्यचित् वृक्षस्य अधः उपविश्य सङ्गीतस्य अभ्यासम् आरब्धवान् । अल्पे एव काले तदीयाः अपस्वराः तम् एव नितराम् अपीडयन् । सः सङ्गीतं स्थगयित्वा दीर्घं निश्श्वसितवान् ।

तदनन्तरक्षणे एव कश्चन ध्वनिः श्रुतः - ''गानं किमर्थं स्थगितम् ? कृपया गानम् अनुवर्तयतु'' इति । मुकुन्दः आश्चर्येण तस्यां



दिशि दृष्टिं प्रसारितवान् । कोऽपि तेन न दृष्टः । ''केन एवम् उच्यते ? कृपया मम पुरतः आगम्यताम्'' इति ।

अनन्तरक्षणे एव कश्चन पिशाचः तस्य पुरतः आगतः । तं दृष्टवतः मुकुन्दस्य शरीरे कम्पनम् आरब्धम् ।

एतत् दृष्ट्वा पिशाचः प्रीत्या अवदत् - ''अलं भीत्या । एतस्मिन् वृक्षे मया सह अन्ये अपि त्रयः पिशाचाः निवसन्ति । अस्मासु अहं ज्येष्ठः अस्मि । वयं सर्वे महाशक्तिमन्तः । भवतः गानम् अस्माकं प्रियं जातम् । अतः कृपया भवान् स्वस्य गानम् अनुवर्तयतु'' इति ।

''गानम् अनुवर्तनीयम् इति वदन् पिशाचः भवान् सङ्गीतविषये किं वा जानाति ?'' इति अपृच्छत् मुकुन्दः ।

''सङ्गीतविषये अधिकम् एव जानीमः वयम् । पूर्वं वयं मानवाः सन्तः नगरेषु अटामः स्म । सङ्गीतसभासु अपस्वरं श्रावयन्तः वयम् आनन्देन जीवामः स्म । किन्तु शिवशास्त्रि-नामकः कश्चित् सर्वदा अस्माकं विरोधं करोति स्म । भवतः सङ्गीतं वयं सौभाग्येन एव शृण्वन्तः स्मः'' इति अवदत् सः पिशाचः ।

एतदनन्तरं मुकुन्दः तेषां पिशाचानां पुरतः गानम् आरब्धवान् । यथा यथा तस्य सङ्गीते अपस्वरः प्रवृद्धः तथा तथा ते पिशाचाः अधिकम् आनन्दम् अनुभूतवन्तः । एतत् लक्षितवान् शिवशास्त्री निश्चितवान् यत् मया मानवानां मध्ये शिवशास्त्रिणः प्रतिस्पर्धितया सङ्गीतप्रचारः करणीयः इति । पिशाचाः तस्य विचारम् अङ्गीकृतवन्तः । मानवरूपं प्राप्य तेन सह आगमनम् अपि ते अनुमतवन्तः ।

प्रस्थानात् पूर्वं मुकुन्दः पिशाचम् अवदत् - ''मानवानाम् अभिरुचीनां परिवर्तनाय अन्य-विधं सङ्गीतं निरन्तरं श्रावणीयम् । विचित्राः घटनाः प्रदर्श्य तेषां मनः आक्रष्टव्यम् । एतदर्थं प्रभूतस्य धनस्य व्ययः करणीयः'' इति ।

तदा सः पिशाचः अवदत् - ''धनस्य विषये चिन्ता मास्तु भवतः । यावत् आवश्यकं तावत् धनं वयं दास्यामः । याः विचित्रघटनाः दर्शनीयाः ताः दर्शयिष्यामः अपि । अतः कापि चिन्ता मास्तु भवतः'' इति ।

एतस्य श्रवणात् मुकुन्दः नितरां सन्तुष्टः जातः । सः मानवरूपैः पिशाचैः सह नगर-प्रवेशं कृतवान् । नगरप्रमुखेण प्रमोदेन मिलितवान् च । तस्य वेषभूषादिवैभवं दृष्ट्वा नगरप्रमुखः नितरां प्रभावितः जातः । सः

तम् आदरेण स्वागतीकृतवान् ।

मुकुन्दः प्रमोदम् उक्तवान् - ''एषा सृष्टिः एव वैविध्यमयी । एकविधम् एव श्रेष्ठम् इति एतस्मिन् लोके नास्ति । सङ्गीतविषये अपि एवमेव । शिवशास्त्री यां सङ्गीतपरम्पराम् अनुसरति सा एव श्रेष्ठा इति जनाः भावयन्ति । एतत् अनुचितम् । शिवशास्त्री स्वरब्रह्मा स्यात् नाम । अहमस्मि अपस्वरब्रह्मा । अहं भवते प्रभूतं धनं ददामि । भवता मम कार्यक्रमस्य महान् प्रचारः करणीयः'' इति ।

धनलोभेन वशीकृतः प्रमोदः अपस्वर-ब्रह्मणः विषये महान्तं प्रचारं कृतवान् । तस्य प्रथमं कार्यक्रमं प्रति बहवः आगताः । मुकुन्दः स्वस्य अपस्वरमिश्रितेन सङ्गीतेन तेषां मनः रञ्जितवान् । पिशाचाः अपि तेन सह तिष्ठन्तः इन्द्रजालादिभिः जनान् रञ्जितवन्तः । अतः एषः कार्यक्रमः जनानां सन्तोषाय जातम् ।

एतादृशाः एव कार्यक्रमाः अन्यत्र अपि प्रवृत्ताः । मुकुन्दस्य एषः आडम्बरपूर्णः सङ्गीतकार्यक्रमः जनानां प्रसंशां प्राप्नोत् । केचन शिवशास्त्रिणः सङ्गीतपरम्पराम् अनुत्कृष्टां भावितवन्तः अपि ।

कदाचित् जनाः शिवशास्त्रिणं पृष्टवन्तः - ''अपस्वरमिश्रितात् सङ्गीतात् अपि जनानाम् आकर्षणं कर्तुं शक्यते इत्येषा कल्पना भवता कथं प्राप्ता ?'' इति ।

यदि वस्तुस्थितिः उच्येत तर्हि जनाः मम उपहासं कुर्युः इति चिन्तयन् मुकुन्दः अवदत् - ''मया सङ्गीतज्ञत्वेन या ख्यातिः प्राप्ता तस्याः मूलं कारणं - स्वरब्रह्मा शिवशास्त्री, वैद्यः सहदेवः च । एतद्विषये इतोऽपि अधिकं किमपि



वक्तुं न इच्छामि अहम्'' इति ।

एतस्मिन् एव काले शिवशास्त्रिणः शिष्यः गोविन्दः मुकुन्दस्य समीपम् आगत्य उक्तवान् - ''मुकुन्द ! दीर्घकालस्य अनन्तरं भवतः भाग्यं फलितम् अस्ति । गुरुवर्यः भवतः पाठनम् अङ्गीकृतवान् अस्ति । भवतः आनयनाय सः मां प्रेषितवान् अस्ति'' इति ।

एतत् श्रुत्वा मुकुन्दः आश्चर्यमिश्रितेन स्वरेण - ''महतः सन्तोषस्य विषयः एषः । इदानीं देवाः मयि कृपादृष्टिं कृतवन्तः । एषोऽहं भवता सह आगच्छामि । गच्छाव तावत्'' इति उक्त्वा गोविन्देन सह प्रस्थितवान् ।

तदा मानवरूपाः पिशाचाः अवदन् - ''मुकुन्द ! सावधानता भवतु एतद्विषये । भवतः कण्ठस्वरं परिवर्तयिष्यति शिव-शास्त्री । एतावता भवता या कीर्तिः सम्पादिता

सा विनष्टा भविष्यति तेन'' इति ।

एतत् श्रुत्वा मुकुन्दः गमनं स्थगयित्वा यदा चिन्तने उद्युक्तः तदा गोविन्दः - ''मित्र ! पुनश्चिन्तनीयः विषयः न अयम्'' इति वदन् तम् आकर्षन् अग्रे नीतवान् एव ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! मुकुन्दः अपस्वरमिश्रितेन सङ्गीतेन ख्यातिं गतः । एतस्य त्यागात् अपायः इति पिशाचैः स्मारितः अपि सः किमर्थं शिवशास्त्रिसमीपं गतः ? यः शिवशास्त्री मुकुन्दस्य शिष्यत्वेन स्वीकारं निराकृतवान् आसीत् सः किमर्थं वा तस्य स्वीकारे मतिं कृतवान् ? मुकुन्दस्य कीर्तिः मम ख्यातिं ह्रासयति इति किं चिन्तितं तेन ? अथवा ईर्ष्यया सः तथा कृतवान् ? मम एतेषां प्रश्नानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''अस्माभिः आदौ मुकुन्दस्य प्रवृत्तिः अवगन्तव्या । सः वस्तुतः सङ्गीताध्ययने आसक्तः । किन्तु कश्चित् प्रयत्नं कृत्वा असाफल्यं प्राप्य सः अरण्यं गतः । दौर्भाग्यवशात् तत्र तेन पिशाचानां सहवासः प्राप्तः । अतः सः अपस्वरयुक्ते सङ्गीते प्रवृत्तः जातः । सः जानाति स्म यत् या ख्यतिः प्राप्ता सा पिशाचानाम् इन्द्रजालकारणतः, जनानाम् अज्ञानतः, कालस्य आनुकूल्यात् च इति । ख्यातिकाले अपि सङ्गीतज्ञानपिपासा तस्मिन् आसीत् एव । अतः एव सः शिवशास्त्रिणः निमन्त्रणप्राप्तिसमनन्तरम् एव प्रस्थितवान् । अपस्वरप्रियाः पिशाचाः मुकुन्दं निवारयितुं प्रयासं कृतवन्तः । मुकुन्दः तेषां स्वार्थसाधकतां जानाति स्म । अतः सः तेषां वचनम् उपेक्षितवान् । शिवशास्त्री तं निमन्त्रितवान् यत् तस्यापि विशेषकारणम् अस्ति । सः सङ्गीतस्यैव हितम् इच्छति स्म । 'यदि मुकुन्दः अपस्वरसङ्गीतात् न निवर्त्येत तर्हि शास्त्रीयसङ्गीतस्य हानिः स्यात्' इति विचिन्त्य सः निर्णीतवान् यत् मुकुन्दस्य पाठनस्य अङ्गीकारादेव सङ्गीतस्य हितम् इति । सङ्गीतविकासैकासक्तिः तस्य । सः ईर्ष्यावान् तु सर्वथा न'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।






## पूर्वं पत्राणि नीयन्ते स्म अश्वारोहिभिः



त्रयोदशे शतके भारते यदा पत्रालय-व्यवस्था आरब्धा तदा पत्राणि नीयन्ते स्म जनानां द्वारा अश्वानां द्वारा च । आदौ अश्वचालकाः स्वतन्त्राः नियुज्यन्ते स्म । अग्रिमे काले ब्रिटिश्शासनेन नियुक्ताः एव एतत् कार्यं कृतवन्तः । एकस्मात् स्थानात् प्रस्थितः एकः अश्वारोही चतुर्मैल्दूरं गच्छेत् । तत्र अपरः अश्वारोही तिष्ठति । सः पत्राणि अग्रे नयति स्म । पादचारिणा पत्रवाहकेण मैल्त्रयं यावत् गन्तव्यं भवति स्म । पादचारिणः पत्रवाहकाः किङ्किणीयुक्तं दण्डं गृहीत्वा सञ्चरन्ति स्म । वन्यपश्वादीनां निवारणाय भवति स्म सः किङ्किणीनादः ।

## असमप्रदेशे अहोयाः

अहोयाः शन्जनजातिविशेषे जाताः । ते भारत-म्यान्मारदेशयोः मध्ये स्थिते पोङ्गनामके प्रदेशे निवसन्ति । त्रयोदशे शतके ते पट्खैपर्वतमार्गेण भारतं प्रविश्य स्थानीयप्रमुखाणाम् अनुज्ञां प्राप्य तत्र वासम् आरब्धवन्तः, ब्रह्मपुत्रखातस्य प्रमुखवासिनः जाताः च । एषः प्रदेशः असमीयभाषया 'अशाम्' इति उच्यते, बर्मीयभाषया च 'अहोम्' इति । एषः प्रदेशः पूर्वं निर्दिश्यते स्म 'कामरूप'शब्देन । अहोयाः हिन्दुजीवनपद्धतिम् आत्मसात्कुर्वन्तः बहूनि मन्दिराणि अपि निर्मितवन्तः सन्ति । तेषां राजधानी अस्ति 'शिबसागर'नामकं नगरम् ।



अन्यदेशीया जानपदकथा (प्राचीनग्रीस्देशीया)

# सर्वं विधेः आयत्तम्

एङ्गायसः साहसप्रियः । सः नौकाचालकनायकः सन् विविधाः कष्टकरीः घटनाः सम्मुखीकृतवान् । जीवनस्य सन्ध्याकाले सः ऐच्छत् यत् मया इतः परं कुत्रचित् प्रशान्ते स्थले गृहं निर्माय सुखजीवनं यापनीयम् इति । अतः सः कस्यचित् पर्वतस्य शिखरे गृहं निर्मितवान् । तस्य जीवने धनाभावः तु न आसीत् । अतः सः गृहकार्याय बहून् सेवकान् नियोजितवान् ।

''वत्स ! भगवान् भवते अपारम् ऐश्वर्यम् अनुभवं च दत्तवान् अस्ति । विशिष्टं किमपि साधयता भवता स्वस्य जीवनस्य सार्थकता सम्पादनीया'' इति तम् अबोधयत् कश्चन हितैषी गुरुः । एङ्गायसः तत् अङ्गीकुर्वन् शिरः तु चालितवान्, किन्तु तदनुगुणं न व्यवहृतवान् । तं परितः सदा बहवः सुहृदः भवन्ति स्म । ते एङ्गायसस्य मनोविनोदाय बहुधा प्रयतन्ते स्म । अतः एङ्गायसः अपि तेषां सन्तोषाय प्रभूतं धनं व्ययीकरोति स्म ।



स च तादृशः कालः आसीत् यस्मिन् च लघूनि राज्यानि परस्परं कलहं कुर्वन्ति स्म । ये जयं प्राप्नुवन्ति ते शत्रुपक्षीयान् सहस्रशः पुरुषान् महिलाः च दासान् कुर्वन्ति स्म । तान् स्वदेशम् आनीय कठिने कार्ये नियोजयन्ति स्म । तेषु सेवकेषु कृतविद्याभ्यासाः बुद्धिमन्तः च बहवः भवन्ति स्म । किन्तु एते स्वामिनः तेषां योग्यतां सर्वथा न पश्यन्ति स्म । कठिने परिश्रमबहुले कार्ये तान् नियोजयन्ति स्म । दासाः अस्वस्थाः मरणावस्थाम् आपन्नाः वा भवन्ति चेदपि स्वामिनः तेषां विषये अल्पाम् अपि करुणां न प्रदर्शयन्ति स्म ।

एङ्गायसस्य अपि बहवः सेवकाः आसन् । तेषां कार्यस्य पर्यवेक्षकः कश्चन निर्दयः क्रूरी च । कदाचित् एङ्गायसः सङ्कल्पितवान् यत् द्राक्षावाटिका काचित् निर्मातव्या इति । अतः तस्य सेवकैः अहोरात्रं शिलामय्यां भूमौ कठिनः परिश्रमः करणीयः अभवत् । स्वेदेन आर्द्रान् तान् कशया ताडयन् सः पर्यवेक्षकः कदाचित् अवदत् - ''त्वर्यताम् त्वर्यताम् । मूर्खाः भवन्तः परमालसाः । अस्माकं स्वामी श्रेष्ठजातीयां

द्राक्षां शीघ्रातिशीघ्रं वर्धयितुम् इच्छति । ततः उत्तमस्तरीयं मद्यं निर्मातव्यम् इत्यस्ति तस्य सङ्कल्पः'' इति ।

तस्य कथनं समर्थयन् एङ्गायसः अवदत् - ''आम् । मया आरोपयितुम् इष्टायाः द्राक्षायाः जातिः जगति एव अत्युत्कृष्टा अस्ति । एषा भूमिः अपि तस्याः निमित्तम् अनुगुणा अस्ति इति श्रूयते । अतः आत्मना वर्धितया द्राक्षया निर्मितस्य मद्यस्य प्रथमः चषकः कदा वा चूष्येत इति कातरतया प्रतीक्ष्यते मया'' इति ।



''श्रुतं खलु भवद्भिः ? वर्ध्यमानायाः द्राक्षायाः आधारेण निर्मितस्य मद्यस्य रसस्य आस्वादने नितरां कातरः अस्ति अस्माकं स्वामी । अविलम्बेन कार्यं साधनीयम् । हुँ, त्वरया कार्यं क्रियताम्'' इति कशया कांश्चित् दौर्भाग्यग्रस्तान् ताडयन् अवदत् पर्यवेक्षकः ।

तावता सेवकानां मध्यतः कस्यचित् ध्वनिः श्रुतः - ''हन्त ! अस्माभिः वर्ध्यमानया द्राक्षया निर्मितस्य मद्यस्य आस्वादनं प्रायः कर्तुं नार्हति अस्माकं स्वामी'' इति ।

यद्यपि एषः ध्वनिः क्षीणः एव आसीत् तथापि सः पर्यवेक्षकेण तु स्पष्टतया श्रुतः एव । 'रे मूर्ख ! किम् उच्यते एतत् भवता ?'' इति क्रोधमिश्रितेन तर्जनस्वरेण अवदत् सः ।

एङ्गायसः कुतूहलेन अपृच्छत् - ''किं वदति सः सेवकः ?'' इति ।

पर्यवेक्षकः तं सेवकं केशेषु गृहीत्वा आकृष्य स्वामिनः पुरतः उपस्थापयन् अवदत् - ''भ्रान्तमतिः एषः उन्मत्तवचनानि कानिचन वदति । सम्यक् दण्डनीयः अयम्'' इति ।

एङ्गायसः तं सेवकम् अवदत् - ''भोः, यत् उक्तं तदेव पुनरपि वदतु तावत् मम पुरतः'' इति ।

तदा सेवकः शान्तेन एव स्वरेण अवदत् - ''अस्माकं स्वामी वर्ध्यमानया द्राक्षया निर्मितं मद्यम् आस्वदितुं नार्हति प्रायः इति उक्तं मया'' इति ।

क्षणकालं तत्र नीरवता प्रसृता । सर्वे अचिन्तयन् यत् प्रायः एङ्गायसः एतं सेवकं कठोरतया दण्डयेत्, निर्दयं मारयेत् वा इति । किन्तु एङ्गायसेन तथा तु न कृतम् । सः भटान् आज्ञापितवान् - ''एषः पलायनं यथा न कुर्यात् तथा एतस्मिन् विशेषदृष्टिः भवतु'' इति ।

कालः गतः । मासाः अतीताः । उत्तमजातीयाः द्राक्षालताः तत्र प्रवृद्धाः । निपुणैः मद्यनिर्मातृभिः द्राक्षारसेन उत्कृष्टं स्वादु मद्यं



निर्मितम् अपि । तैः निर्मितस्य मद्यस्य चषकः एङ्क्लायसस्य पुरतः स्थापितः । एङ्क्लायसः तत् स्वीकृत्य उत्पीठिकायाः पुरतः उपविश्य आज्ञां कृतवान् - ''आनीयतां सः सेवकः अत्र'' इति ।

सर्वे अचिन्तयन् यत् मद्यस्य रुचिम् आस्वदमानः स्वामी तं प्रायः दण्डयिष्यति इति ।

सेवकः भटैः आनीतः । सः यथापूर्वं निर्भीकः एव दृश्यते स्म । तस्य मुखे भीतेः आतङ्कस्य वा रेखापि न आसीत् ।

तं दृष्ट्वा उच्चैः हसन् एङ्क्लायसः - ''भोः, पूर्वं भवता किम् उक्तम् इति किं स्मर्यते ? पश्यतु इदानीम् । एषः अहम् अत्र निर्मितस्य मद्यस्य रुचेः आस्वादनाय उद्युक्तः अस्मि'' इति उक्त्वा सेवकस्य पुरतः स्थित्वा पुनरपि उच्चैः हसित्वा अपृच्छत् - ''किं वक्तुमिच्छति भवान् एतद्विषये ?'' इति ।

तदा सेवकः शान्तस्वरेण एव अवदत् - ''श्रीमन् ! ओष्ठचषकयोः मध्ये अन्तरं भवितुम् अर्हति एव'' इति ।

एङ्क्लायसः अट्टहासं कुर्वन् पानाय मद्यचषकम् उन्नीतवान् । तावता कश्चन भटः वेगेन धावन् तत्र उपस्थाय अवदत्– ''श्रीमन् ! कश्चन घोरः भल्लूकः अस्माकं द्राक्षावाटिकां प्रविश्य सर्वं नाशयन् अस्ति'' इति ।

''किम् ! घोरः भल्लूकः द्राक्षावाटिकां प्रविष्टः अस्ति ?'' इति साश्चर्यं सातङ्कं च वदन् एङ्क्लायसः चषकम् उत्पीठिकायाः उपरि स्थापयित्वा खड्गं गृहीत्वा तस्य संहाराय वेगेन ततः निर्गतवान् । किन्तु दौर्भाग्यवशात् सः भल्लूकः एव तम् अमारयत् ।

उत्पीठिकायाः उपरि स्थापितं तत् मद्यम् अनास्वादितम् एव अतिष्ठत् । अतः एव लोकोक्तिः काचित् श्रूयते – 'ओष्ठचषकयोः मध्ये अन्तरं भवितुम् अर्हति' इति ।

एतस्य तात्पर्यम् एतत् यत् 'यदाकदाचिदपि यत्किमपि भवितुम् अर्हति लोके । सुचिन्तिता अपि योजना अन्तिमे क्षणे सर्वथा परिवृत्ता भवितुम् अपि अर्हति एव । सर्वं विधेः आयत्तम्' इति ।

# शास्त्रज्ञानं व्यवहारज्ञानं च

रामपुरे रङ्गनाथः नाम कश्चन वैद्यः आसीत् । यः रोगी तस्य समीपम् आगच्छति तस्य आकारं व्यवहारादिकं च दृष्ट्वा सः वदति स्म यत् तं कः रोगः बाधते, तदीयं वयः च किम् इति । एवं निष्कृष्टतया सर्वं वदतः तस्य सामर्थ्यं दृष्ट्वा सर्वे आश्चर्यान्विताः भवन्ति स्म । सः उत्कृष्टः वैद्यः इति सर्वे वदन्ति स्म । तथापि अल्पाः एव तत्समीपम् आगच्छन्ति स्म चिकित्साम् अपेक्ष्य ।

कदाचित् तदीयः गुरुः चरकाचार्यः तं द्रष्टुम् आगतः । तस्मिन् एव समये तत्समीपम् आगता काचित् महिला तम् अवदत् – ''महाशय ! अहं विंशतिवर्षीया अस्मि । एतस्मिन् अल्पे एव वयसि अज्ञातः कश्चन व्याधिः मां बाधते । एषः व्याधिः कीदृशः, एतस्मात् मोक्षश्च कथम् इति वदतु कृपया'' इति ।

तां परीक्ष्य रङ्गनाथः अवदत् – ''भवती असत्यवादिनी । अहं विंशतिवर्षीया इति भवत्या उक्तम् । किन्तु भवत्याः वयः नवविंशत्यधिकवर्षात्मकं स्यादेव'' इति । एतत् श्रुत्वा असन्तुष्टा सा महिला कोपेन ततः निर्गतवती ।

तदा रङ्गनाथः गुरुं चरकाचार्यम् अवदत् – ''गुरुवर्य ! पश्यतु एतस्याः व्यवहारम् । स्वयम् असत्यम् उक्तं तया । तथापि सत्यवक्तरि मयि कोपः ! एवं पौनःपुन्येन प्रवर्तते । न जाने एतस्य किं कारणम् इति'' इति ।

तदा चरकाचार्यः मन्दहासपूर्वकम् अवदत् – ''भवतः शास्त्रज्ञानं तु श्लाघ्यम् एव । किन्तु व्यवहारज्ञानं भवतः अल्पम् । 'न ब्रूयात् सत्यमप्रियम्' इति वचनं भवता स्मर्तव्यम् । व्यवहारज्ञानं सम्यक् अस्ति चेदेव वृत्तौ सफलता प्राप्यते, न अन्यथा'' इति ।



# वार्ताविशेषः

## महिलानां कृते प्रार्थनामन्दिरम्

श्रद्धालवः मुस्लिमाः दिने पञ्चवारं प्रार्थनामन्दिरं प्रति गच्छन्ति यदा च प्रार्थनामन्दिरतः निमन्त्रणध्वनिः श्रूयते तदा । किन्तु एवं प्रार्थनामन्दिरं प्रति गमनाय महिलानां नास्ति अवकाशः । ताः गृहे एव प्रार्थनां कुर्युः इति नियमः । ताः प्रार्थनामन्दिरं प्रति गमनाय अधिकारम् अर्हन्ति उत न इत्यत्र अस्ति महान् विवादः । तमिळुनाडुराज्ये पुदुक्कोट्टैजनपदे महिलानां कृते एव एकं प्रार्थनामन्दिरं निर्मितम् अस्ति एषु दिनेषु । एतदर्थं पेरम्बूरुप्रदेशः चितः अस्ति । अत्र कश्चन मुस्लिम्कन्याविद्यालयः एतावता एव अस्ति । 'छाया'नामकं महिलासङ्घटनम् एतस्यां योजनायाम् अग्रेसरम् अस्ति ।





## नेत्राभ्यां शिलाकणिकाः

नेपालीयः जनकपुरजनपदीयः आनन्दनगरनिवासी मन्दीपपोखरेलः एकादशवर्षीयः बालः । तेन इन्द्रजालं किमपि न अधीतम् । तथापि यदा सः अश्रूणी स्रावयति तदा तण्डुलकणसदृश्यः शिलाकणिकाः तदीयाभ्यां नेत्राभ्यां निर्गच्छन्ति । सन्तोषस्य दुःखस्य वा क्षणे अप्राप्ते अपि तदीयाभ्यां नेत्राभ्यां तदा तदा शिलाकणिकाः निर्गच्छन्ति एव । एतस्य निवारणाय कृता कापि चिकित्सा फलदायिनी न जाता । वैद्याः अपि अत्र असफलाः ।

इदानीं तस्य मातापितरौ आयुर्वेदसिद्धयुनानीप्रभृतिषु पारम्परिकासु चिकित्सासु प्रवृत्तौ स्तः । आश्चर्यं नाम शिलाकणिकानिर्गमनसमये मन्दीपः तु न कामपि वेदनाम् अनुभवति ।




# दि जी-मैन क्विज़

१. मेजर सूर्यराज ____________ हाई स्कूल में पीटी का टीचर है.
क. सेंट पीटर
ख. सेंट मेरी
ग. सेंट थॉमस

२. टैरोलीन के पास ____________ की विशाल सेना है.
क. मशीन्स
ख. एंड्रॉइड्स
ग. रोबोट्स

३. टैरोलीन की गुप्त सेना टी-टावर के ____________ नीचे स्थित थी.
क. ३०० मील
ख. १०० मील
ग. ४०० मील

४. एंड्रॉइड्स को नष्ट करने के लिए जी-मैन ____________ किरणों का इस्तेमाल करता है.
क. हरी
ख. लाल
ग. नीली

५. जी-मैन द्वारा नष्ट किए गए तमाम रोबोट्स और भी ____________ मशीनें बन गई.
क. विशाल
ख. नन्हीं
ग. बेकार



# अरुणाचलप्रदेशीया जानपदकथा

# धनुर्विद्यायाः परीक्षा



''दृष्टिः पुरतः..'' ''दृढं गृह्यताम्..''
''आकर्णम् आकृष्यताम् ..'' सुंय् ....''
''मुच्यताम् ...'' ''स्थगयताम् .....''
''साधु कृतम् .....''

स च प्रदेशः एतादृशैः आज्ञाशब्दैः हर्ष-सूचकैः ध्वनिभिः च पूर्णः आसीत् । सशब्दं निर्गच्छतां बाणानां स्फुरणम् अपि भवति स्म तदा तदा । अरुणाचलप्रदेशे स्थिते दिवाङ्गखाते प्रति-दिनं दृश्यमानं दृश्यम् आसीत् एतत् ।

धनुर्विद्यायाः प्रशिक्षणं प्रचलति स्म तत्र । अतः पूर्वोक्ताः विशेषाः तत्र । बहवः तरुणाः धनुर्विद्याभ्यासे निरताः दृश्यन्ते स्म । अनु-भविनः वृद्धाः केचन धनुर्विद्यां तान् पाठयन्ति स्म । एवम् अध्येतारः बोधयितारः च न मानवाः, अपि तु वानरकुलीयाः । नायम् आश्चर्यस्य विषयः । यतः बहोः कालात् पूर्वं स्थितं दृश्यम् एतत् ।

तेषु दिनेषु इदुमिश्मिनामकात् ग्रामात् अनतिदूरे स्थिते अरण्य-परिसरे वानरकुलीयाः निवसन्ति स्म । तेषु बहवः धनुर्विद्यायां सुनिपुणाः । कम्पमानायां शाखायां स्थितस्यापि लक्ष्यस्य भेदने अपि ते समर्थाः । अतः एव इदुमिश्मिग्रामीणाः तेषां विरोधं न कुर्वन्ति स्म केनापि कारणेन ।

वानराणां प्रमुखाः स्वकुलीयानां तरुणानां धनुर्विद्याशिक्षणे विशेषतः आदरवन्तः । 'तरुणे वयसि बोधितं चेदेव योग्यं फलं प्राप्यते' इति ते जानन्ति स्म । ते वृक्षात् वृक्षम् उत्प्लवमानाः सुदूरस्थानि पर्वतशिखराणि प्राप्नुवन्ति स्म । तेषु स्थितानाम् उन्नतानां वृक्षाणाम् अग्रभागे स्थित्वा परितः सर्वत्र दृष्टिं प्रसार्य धनुर्निर्माणाय बाणानां सज्जीकरणाय च उत्तमः वेणुः वेत्रं च कुत्र अस्ति इति परिशील्य तेषां सङ्ग्रहं कृत्वा तैः धनूंषि बाणान् च निर्मान्ति स्म । धनुर्विद्या-प्रशिक्षणकेन्द्रे तेषाम् उपयोगः भवति स्म ।



उषसि एव तरुणाः प्रशिक्षणकेन्द्रम् आगत्य धनुर्विद्यायाः अभ्यासस्य आरम्भं कुर्वन्ति स्म । ज्येष्ठाः तेषां लक्ष्यैकनिष्ठतां, धनुर्ग्रहणकौशलं, बाणप्रयोगपाटवं च सम्यक् परीक्षन्ते स्म । कदाचित् तरुणानां ज्येष्ठानां च अभ्यासयुद्धं प्रचलति स्म । तदा तु समग्रः खातप्रदेशः बाणैः आवृतः भवति स्म ।

तं प्रदेशं गन्तुम् उद्युक्तान् बालान् मातरः तर्जयन्ति स्म – ''अनवधानेन तत्र सञ्चारः कृतः चेत् वनचिकित्सालयः प्रवेष्टव्यः भवेत् इति किं भवता न ज्ञायते ? कदाचित् बाणेन भवान् विद्धः भवेत् अपि'' इति ।

एवमेव मासाः गताः । वर्षाणि अपि गतानि । केवलात् धनुर्विद्याभ्यासात् तेषु वानरेषु नीरसता उत्पन्ना । कदाचित् वानराणां प्रमुखस्य पुत्रः एव पितरम् अवदत् – ''सर्वदा अपि किम् एतत् धनुर्विद्याप्रशिक्षणं नाम ! मध्ये मध्ये मनोविनोदाय अपि किमपि भवेत् । अन्यच्च महत् बाणप्रयोगकौशलं प्राप्य अपि तस्य उपयोगः न क्रियते चेत् अधीतं सर्वम् व्यर्थम् एव खलु ?'' इति ।

''युक्तम् उक्तं भवता । मदमत्तः गजः, दुष्टः व्याघ्रः इत्यादयः महत् दौष्ट्यम् आचरन्ति, अस्मान् उपेक्षया पश्यन्ति च । यदि वयं बाणप्रयोगकौशलेन तान् किञ्चित् निगृह्णीयाम तर्हि सर्वेषां वनवासिनाम् उपकारः एव कृतः भवेत्'' इति अवदतां नीलः कालः च ।

''योग्यः बाणप्रहारः तेषां निग्रहणे उपकुर्यात् एव'' इति अवदत् हरिप्रियः ।

तदा कुचेष्टापरः वनेशः अवदत् – ''सः दुष्टः वृकः अपि दण्डनीयः अस्माभिः । वराकान् कुक्कुटान् निर्दयं पीडयति सः । यदि वयं बाणप्रयोगेण तस्य नखान् उत्पाटयितुं शक्नुयाम तर्हि अहो, कियान् आनन्दः प्राप्येत !'' इति । एतत् श्रुत्वा अन्ये सर्वे वानराः हसितवन्तः । ततः एकैकः अपि एकैकम् उपायम् अश्रावयत् । बहवः तरुणवानराः विनोदकार्ये प्रवर्तनाय सज्जाः जाताः अपि ।

दिवाङ्गारण्ये तेषां विविधाः विनोदव्यवहाराः आरब्धाः । तस्मात् दिनात् वानराणां व्यवहार–

हसितवन्तः । ततः एकैकः अपि एकैकम् उपायम् अश्रावयत् । बहवः तरुणवानराः विनोदकार्ये प्रवर्तनाय सज्जाः जाताः अपि ।

दिवाङ्गारण्ये तेषां विविधाः विनोदव्यवहाराः आरब्धाः । तस्मात् दिनात् वानराणां व्यवहार-विषये बहवः आक्षेपाः उद्गताः सर्वाभ्यः दिग्भ्यः । तेषां बाणानां प्रहारं प्राप्य बहवः चिकित्सालयं प्रविष्टवन्तः । इदुमिश्मिग्राम-वासिभिः अपि एतस्य परिणामः सम्मुखी-कृतः । बालानाम् अङ्गानि क्षतग्रस्तानि जातानि । ज्येष्ठानां शिरोभूषणानि बाणैः नीतानि । मातृभिः शोषणाय आतपे प्रसारिताः मांसखण्डादयः भूमौ पातिताः । एवं बहवः अनर्थाः सम्पन्नाः सर्वत्रापि ।

वानराणां पीडावार्ता वृद्धस्य ग्रामप्रमुखस्य अनूकस्य कर्णपथम् अपि आगता । कदाचित् सर्वे वनजीवनः सम्भूय अनूकस्य समीपं गताः । तान् स्वागतीकृत्य अनूकः अपृच्छत् - ''अपि कुशलं भवतां सर्वेषाम् ? किमर्थं भवतां मुखे चिन्तारेखाः दृश्यन्ते ?'' इति ।

तदा पक्षिराजः अवदत् - ''महोदय ! किं वदाम अस्माकं दुर्गतिविषये ? अरण्ये शान्ततया जीवनम् एव असम्भवं जातमस्ति सर्वथा'' इति ।

ततः गजराजः अवदत् - ''दुश्चेष्टाप्रियाणां वानराणां पीडा वर्णयितुमेव अशक्या । ह्यः मम पुत्रः कदलीफलस्य खादनाय शुण्डाम् उन्नीत-वान् । तावता कुतश्चित् आगतः कश्चन बाणः तम् अविध्यत् । तदा तेन यत् क्रन्दनं कृतं तत् इदानीम् अपि गुञ्जति मम कर्णयोः । समीपे स्थितायां वृक्ष-शाखायाम् उपविष्टौ वानरौ एतत् दृष्ट्वा महान्तम् आनन्दम् अनुभवतः स्म'' इति ।

''आर्य ! अत्र पश्यतु तावत्'' इति वदन् शशकुमारः वस्त्रपट्टेन बद्धं स्वस्य पादं दर्शयन् अवदत् - ''ह्यः वयम् अरण्ये धावनाभ्यासं कुर्वन्तः आस्म । तदा दुष्टैः वानरैः प्रयुक्ताः बाणाः अस्मासु बहून् व्रणितान् अकरोत्'' इति ।

''भवतां दुःखम् अहम् अवगच्छामि । अयि बान्धवाः ! अलं चिन्तया । ते वानराः कथं बोधनीयाः इति अहं चिन्तयिष्यामि । भवन्तः निश्चिन्त तया अरण्यं प्रतिगच्छन्तु'' इति ।

अनन्तरदिने सः वानराणां प्रमुखम् आहूय अपृच्छत् - ''कथं प्रचलति भवत्कुलीयानां तरुणानां धनुर्विद्याभ्यासः ? अरण्ये ग्रामे च तेषां नैपुण्यं वार्ताविषयः अस्ति'' इति ।

''आर्य ! ते सर्वे धनुर्विद्यायाम् अद्वितीयं नैपुण्यम् आसादितवन्तः सन्ति'' इति साभि-मानम् अवदत् वानरप्रमुखः ।



''एवं तर्हि एतस्मिन् वर्षे धनुर्विद्यास्पर्धायां भवत्कुलीयाः एव स्वर्णपदकं प्राप्तुम् अर्हन्ति इति भाति'' इति अवदत् वृद्धः अनूकः ।

''प्रायः सर्वाणि पदकानि अपि अस्मदीयैः एव प्राप्येरन् । अल्पाः किशोराः अपि डयमानं पतङ्गं चटकं चापि वेद्धुं समर्थाः सन्ति'' इति अवदत् वानरप्रमुखः ।

''एवम् ! तर्हि भवत्कुलीयानां बाण-प्रयोगकौशलं मया द्रष्टव्यम् एव । श्वः भवान् स्वकुलीयं निपुणतमं धनुर्वीरं नदीतीरं प्रति प्रेषयितुं किं शक्नुयात् ?'' इति ।



अनन्तरदिने कश्चन सुन्दरः वानरः धनुर्बाण-हस्तः सन् आगत्य अनूकं नमस्कृतवान् । अनूकोऽपि धनुर्बाणहस्तः सन् सज्जः आसीत् ।

''किं भवान् स्पर्धार्थं सज्जः ?'' इति तं तरुणं वानरम् अपृच्छत् अनूकः ।

''आम्'' इति अवदत् वानरतरुणः ।

''तत्र, नद्याः अपरतीरस्य समीपे जले काचित् शिला दृश्यते खलु ? किं सा लक्षिता भवता ?'' इति अपृच्छत् अनूकः ।

''पश्यामि एव'' इति अवदत् वानरः ।

''तस्याः शिलायाः जलस्थः भागः बाणेन वेद्धव्यः । यः एतत् कर्तुं समर्थः भवति सः एव जयं प्राप्स्यति । अहम् आदौ बाणप्रयोगं करोमि'' इति अवदत् अनूकः ।

''अस्तु'' इति अवदत् वानरवीरः ।

उभौ अपि क्षणकालं तां शिलां परीक्षा-दृष्ट्या दृष्टवन्तौ । ततः अनूकेन एकः बाणः प्रयुक्तः । सः बाणः सशब्दं गत्वा जलं विभिद्य शिलायां लग्नः । तेन प्रयुक्ताः अन्ये बाणाः अपि शिलायां लग्नाः ।

एतदनन्तरं वानरतरुणः बाण-प्रयोगम् आरब्धवान् । तेन प्रयुक्तः बाणः वेगेन तु गतः, किन्तु जलं भेत्तुम् असमर्थः सन् जले अप्लवत । 'अहो, मम बाणः लक्ष्ये न लग्नः एव !' इति विषादेन अवदत् वानर-तरुणः । ततः तेन पुनरपि द्वित्राः बाणाः प्रयुक्ताः । ते अपि लक्ष्यभेदने असमर्थाः एव ! एतस्मात् वानर-तरुणस्य मुखं कान्तिहीनं जातम् । सः स्वस्य पराजयम् अङ्गीकृत्य ततः निर्गतवान् ।

वस्तुतः अनूकः जानाति स्म एव यत् जयः ममैव इति । यतः तदीयाः बाणाः लोहेन निर्मिताः आसन्, किन्तु वानरतरुणस्य बाणाः तु निर्मिताः आसन् वेत्रेण । काष्ठमयः बाणः जले प्लवते इति तु सहजम् एव खलु ? ततः आरभ्य वानराणां बाणप्रयोगकौशलं क्षीणं जातम् । गच्छता कालेन तत् विनष्टम् अपि ।

# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५०/- पारितोषिकत्वेन

अधस्तनकथा पठ्यताम् -

कश्चन महाकृपणः कदाचित् कार्यविशेषस्य निमित्तं नगरं प्रति प्रस्थितवान् । सः स्वस्य पुत्रम् अवदत् - "भवान् अपि मया सह आगच्छतु । आवां यानेन गच्छाव । किन्तु यानशुल्कदाने न्यूनता यथा स्यात् तथा आवाभ्यां यानचालकेन सह चर्चा करणीया" इति ।

तौ मार्गपार्श्वम् आगतवन्तौ । एकं यानम् आगतम् । कृपणः यानचालकम् अपृच्छत् - "नगरं प्रति आवयोः नयनाय कियत् शुल्कं स्वीक्रियते भवता ?" इति ।

चालकः दश रूप्यकाणि अभ्यर्थितवान् । एतत् अनङ्गीकुर्वता कृपणेन सः प्रेषितः । किञ्चिदनन्तरम् अपरं यानम् आगतम् । पूर्वतनम् एव प्रश्नं पृष्टवान् कृपणः । यानचालकः पञ्चदश रूप्यकाणि ऐच्छत् । कृपणः तम् अपि अप्रेषयत् । तृतीयं यानम् आगतम् । एषः यानचालकः विंशतिं रूप्यकाणि ऐच्छत् । कृपणः तम् अपि अप्रेषयत् ।

- कृपणः त्रीन् अपि यानचालकान् किमर्थं प्रेषितवान् ?
- अन्ते तौ उभौ अपि नगरं कथं गतवन्तौ स्याताम् ?

स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् -

**अन्तिमः दिनाङ्कः - ३०, जून् - २००५**

नाम ------------------------ वयः ---------- जन्मदिनाङ्कः ----------

विद्यालयः ------------------------------------ कक्ष्या ----------

गृहसङ्केतः ------------------------------------------------

------------------------------------------------------------

------------------------------------ Pincode ----------------

पोषकस्य हस्ताक्षरम् भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097



# सुधीरस्य नगरयात्रा

सुधीरस्य शम्भोः च ग्रामः अभिन्नः । सुधीरः तक्षकवृत्तिं करोति, शम्भुश्च लोहकारवृत्तिम् । उभौ अपि स्ववृत्तौ निपुणौ एव ।

कदाचित् पात्रवणिक् कश्चन तं ग्रामम् आगतवान् । शम्भुना ताम्रेण कांस्येन च यानि विविधानि पात्राणि निर्मितानि आसन् तानि विशेषतः अरोचन्त तस्मै । सः शम्भुम् अवदत् यत् नगरं प्रति आगतं चेत् भवतः अर्थस्थितिः उत्तमा भवेत् इति ।

शम्भुः नगरं प्रति गमनाय न सिद्धः । किन्तु पत्नी तं सानुरोधम् अवदत् यत् नगरं प्रति गमनम् एव श्रेयसे इति ।

शम्भोः श्यालः अपि अवदत् - ''नगरे उत्तमं वेतनं प्राप्स्यते । त्रिचतुरमासाभ्यन्तरे अपि अर्थस्थितिः उत्तमा न जाता चेत् भवान् प्रप्यागच्छतु नाम'' इति ।

अन्ते शम्भुः पत्न्या अनुरोधम् असहमानः तेन वणिजा सह नगरं गतवान् ।

अनन्तरदिने एव एषा वार्ता सुधीरस्य पत्न्या भानुमत्या अपि ज्ञाता । 'सुधीरसदृशः तक्षक-निपुणः समीपस्थेषु ग्रामेषु कोऽपि नास्ति' इति सा जानाति स्म ।

अतः सा पतिम् अवदत् - ''आवाम् अपि नगरं गच्छाव । तत्रैव गृहं निर्माय सुखेन निवसाव'' इति ।

सुधीरेण अङ्गीकारः न सूचितः । अतः भानुमती पतिं पुनः अवदत् - ''शम्भुः नगरं गत्वा प्रभूतं धनं सम्पादयन् अस्ति । भवान् तु साहसप्रवृत्तिमान् न । अतः आ विवाहदिनात् अस्माकम् एषा एव स्थितिः'' इति ।

पत्न्याः महतः एतस्य अनुरोधस्य कारणतः सुधीरः अपि अनन्यगतिकतया नगरं गतः । नगरे सः सुधीरम् अवदत् - 'मह्यं कमपि उद्योगं दापयतु' इति ।

ततः उभाभ्याम् अपि उद्योगान्वेषणप्रयत्नः

कृतः । किन्तु सुधीरेण उद्योगः कोऽपि न प्राप्तः एव ।

नगरे तक्षकाः बहवः आसन् । अतः ते एव पर्याप्तमात्रेण उद्योगं न प्राप्नुवन्ति स्म । एवं स्थिते नूतनः सुधीरः कथं वा कार्यं प्राप्तुम् अर्हेत् ?

चत्वारः मासाः अतीताः । आनीतं धनं सर्वं समाप्तम् । तथापि सुधीरेण उद्योगः तु न प्राप्तः । अतः सः अचिन्तयत् यत् ग्रामं प्रति गमनम् एव वरम् इति । 'विना धनं गृहं गतं चेत् पत्नी तर्जयेत् एव' इति सः जानाति स्म । अतः सः वस्त्रेण कर्णौ नासिकां च सम्यक् आवरय्य रात्रौ गृहं प्राप्य द्वारताडनशब्दं कृतवान् ।

भानुमती द्वारम् उद्घाट्य पत्युः मुखं दृष्ट्वा आश्चर्येण अपृच्छत् - ''किम् एतत् ! न कर्णौ दृश्येते, न वा नासिका । किमर्थम् एवं कृतम् ?'' इति ।

तदा सुधीरः अवदत् - ''अहो, सा च महती कथा । सम्पादितेन धनेन सह अहं ग्रामं प्रत्यागच्छन् आसम् । मध्येमार्गं क्रूराः चत्वारः लुण्ठाकाः मम अभिमुखम् आगताः । परिश्रमेण सम्पादितं धनं तेभ्यः दातुम् अनिच्छन् अहं तेषां विरोधं कृतवान् । तदा तेषु कश्चित् तीक्ष्णां छुरिकां दर्शयन् अवदत् - 'भोः, यदि प्राणाः प्रियाः स्युः तर्हि विना विरोधं धनग्रन्थिः अस्मभ्यं दीयताम् । अन्यथा एषोऽहं भवतः कर्णौ नासिकां च कर्तयिष्यामि क्षणाभ्यन्तरे' इति ।''

''धनं पुनः सम्पादयितुं शक्येत, न तु अङ्गानि । एतादृशे प्रसङ्गे धनदानम् एव वरम् । प्राणाः तु कथञ्चित् रक्षणीयाः एव'' इति वदन्ती भानुमती पत्युः मुखे स्थितं वस्त्रम् अपनेतुम् उद्युक्ता ।

तदा सुधीरः स्वयमेव वस्त्रम् अपनयन् अवदत् - ''भवत्या यथा उक्तं तथैव कृतं मया अपि । अतः मदीयं समग्रं सम्पादनं तैः नीतम् । तस्मात् मम नासिका कर्णौ च रक्षिताः जाताः । देवो दयालुः'' इति ।

''तैः भवतः सम्पत्तिः नीता स्यात् । किन्तु वृत्तिकौशलम् अक्षुण्णमेवास्ति । अतः अलं चिन्तया'' इति पतिम् उक्तवती भानुमती ।

स्वस्य उपायः फलितः यत् तदर्थं सुधीरः मनसि एव आनन्दं प्राप्तवान् ।





# धूर्तः योगी

प्राचीने काले पाञ्चालनगरीं राजधानीं परिकल्प्य रेणुकेशः नाम राजा कुरु-राज्यं पालयति स्म । तेषु एव दिनेषु हिमालये पञ्चशतस्य संन्यासिनां गुरुः महारक्षितः नाम तपस्वी अपि आसीत् ।

कदाचित् महारक्षितः शिष्यैः सह सञ्चरन् पाञ्चालनगरीम् अपि आगतः । संन्यासिनाम् आगमनेन राजा नितरां सन्तुष्टः । सः महारक्षितं यथोचितं स्वागतीकृत्य सत्कृत्य उद्याने तस्य वासाय व्यवस्थां कृतवान् ।

वर्षऋतोः समाप्तिं यावत् महारक्षितः तत्रैव वासम् अकरोत् । तदनन्तरं सः हिमालयं प्रति प्रस्थितः ।

प्रतिगमनसमये सर्वे संन्यासिनः कस्यचित् वृक्षस्य अधः उपविश्य वार्तालापं कर्तुम् उद्युक्ताः । तदवसरे केचन ज्योतिषप्रियाः शिष्याः प्रश्नम् अकुर्वन् यत् निस्सन्तानः राजा रेणुकेशः सन्तानं प्राप्नुयात् उत न इति ।

तदा महारक्षितः अवदत् - ''अचिरात् एव राजा देवतांशयुक्तं सुपुत्रं प्राप्स्यति'' इति ।

सर्वे शिष्याः जानन्ति स्म यत् महारक्षितस्य मुखात् यत् निर्गच्छति तत् अवितथम् एव भविष्यति इति । एतत् स्मरतः कस्यचित् शिष्यस्य मनसि दुराशा उत्पन्ना । अतः सः मन्दं मन्दं वेगं न्यूनीकुर्वन् सर्वेभ्यः दूरे भूत्वा सर्वेषां संन्यासिनां निर्गमनस्य अनन्तरं पाञ्चालनगरीं प्रप्यागतवान् ।

राजधानीं गत्वा राजानं दृष्ट्वा सः अवदत् - ''महाराज ! हिमालयपर्वतं प्रति गमनसमये अस्माभिः अकस्मात् भवान् स्मृतः । राज्ञः वंशः अग्रे वर्धिष्यते उत न इति प्रश्नः अस्माकं पुरतः आगतः । तदा मया दिव्यदृष्ट्या ज्ञातं यत् दैवांशयुक्तः कश्चन सुपुत्रः प्राप्स्यते भवता इति । तत् निवेदयितुम् एव मया अत्र आगतम्'' इति ।

एतां शुभवार्तां श्रुत्वा नितरां सन्तुष्टः राजा

ततः प्रस्थितं संन्यासिनं सविनयम् अवदत् - ''महात्मन् ! भवान् दिव्यदृष्टिमान् अस्ति । भवता अत्र एव स्थातव्यम् इति मम नम्रं निवेदनम्'' इति ।

सः कपटः योगी एतत् अङ्गीकृतवान् । राजा तस्य वासाय उद्याने योग्यां व्यवस्थां कृतवान् । तत्र वसन् सः धूर्तः योगी शाकादीनां वर्धनं कृतवान् । तेषां विक्रयणं कृत्वा धन-सम्पादनम् आरब्धं तेन ।

तेषु एव दिनेषु बोधिसत्त्वः रेणुकेशस्य पुत्रत्वेन जन्म प्राप्तवान् । सुमनस्कः इति तस्य नाम निश्चितम् ।

सुमनस्कः यदा सप्तवर्षीयः जातः तदा रेणुकेशः उद्दण्डस्य सामन्तराजस्य कस्यचित् निग्रहाय राजधानीतः निर्गतवान् । राज्ञः अनुपस्थितौ कदाचित् सुमनस्कः उद्यानं गतवान् । तत्र शाकसस्यानां वर्धनाय महान्तं परिश्रमं कुर्वन्तं योगिनम् अपश्यत् सः ।

सुमनस्कः दर्शनमात्रेण एव तस्य योगिनः कापट्यम् अवगतवान् । एषः सम्यक् बोधनीयः इति विचिन्त्य सः अपृच्छत् - ''अये उद्यान-पालक ! किम् एतत् अत्र क्रियमाणम् अस्ति भवता ?'' इति ।

दिव्यदृष्टिमत्त्वेन ख्यातः सः धूर्तः योगी बालस्य सुमनस्कस्य एतत् वचनं श्रुत्वा नितरां दिग्भ्रान्तः । सः झटिति अवगतवान् यत् एषः बालः मम योग्यतां पूर्णतः ज्ञातवान् अस्ति इति ।

'एषः यदि इहलोकात् न निवार्येत तर्हि मम कष्टं स्यात्' इति सः अचिन्तयत् ।

युद्धात् राज्ञः प्रत्यागमनकालं पूर्वमेव



ज्ञातवान् सः योगी कमण्डलुम् आसनं च खण्डीकृतवान् । सर्वत्र तृणादयः पातिताः । ततः तैलेन शरीरं लिप्त्वा भूमौ शयनम् अकरोत् सः ।

युद्धतः प्रत्यागतः राजा योगिनः दर्शनाय आश्रमं गतवान् । आश्रमपरिसरः मलिनः आसीत् । योगी वेदनामिश्रितं ध्वनिम् उत्पादयन् भूमौ लुठन् आसीत् । एतत् दृष्ट्वा राजा करौ योजयित्वा विनयेन अपृच्छत् - ''महात्मन् ! किम् एतत् जातम् ?'' इति ।

''महाराज ! एतत्सर्वं भवतः पुत्रस्य दुश्चेष्टितम्'' इति वदन् सः धूर्तः योगी सुमनस्के अनेकान् दोषान् आरोपितवान् ।

एतस्मात् क्रोधेन अन्धतां गतः राजा वधकम् आनाय्य आज्ञां कृतवान् - ''सुमनस्कस्य शिरः कर्तयित्वा अत्र आनीयताम्'' इति ।

तस्मिन् समये सुमनस्कः मातुः पार्श्वे उपविष्टः आसीत् । वधकः गत्वा तं राजाज्ञां श्रावितवान् । सुमनस्कः पितुः समीपम् आगत्य अवदत् - ''तात ! एतं धूर्तं योगिनं भवान् महात्मानं भावितवान् अस्ति । एषः किं किं करोति इति कृपया द्वारपालकानां द्वारा ज्ञायताम्'' इति ।

एतत् श्रुतवान् राजा द्वारपालकान् आहूतवान् । ते तस्य धूर्तयोगिनः धनसम्पादनादिकं विस्तरेण उक्तवन्तः । राज्ञा आश्रमे अन्वेषणं कारितम् । तदा तत्र योगिना रहसि स्थापितस्य धनस्य राशिः प्राप्तः ।

राजा स्वस्य कृत्यस्य निमित्तं पश्चात्तापम् अनुभवन् सुमनस्कम् अवदत् - ''वत्स ! भवता मम अविवेकिता क्षन्तव्या । इतः परं भवान् एव राज्यस्य शासनं करोतु कृपया'' इति ।

किन्तु सुमनस्कः एतत् निराकुर्वन् अवदत् - ''महाराज ! शक्तिशालीनि मूलादीनि यादृशं परिणामं जनयन्ति तादृशम् एव परिणामं जनयन्ति मुखात् निर्गतानि वचनानि अपि । भवतः आदेशस्य पालनं कुर्वन् वधकः मातुः पार्श्वे उपविष्टवन्तं मां वध्यस्थानं प्रति नेतुम् उद्युक्तः आसीत् । एतादृशस्य भवतः देशे स्थित्या किम् ? अहं भवतः राज्यं परित्यज्य गमिष्यामि'' इति ।

सुमनस्कस्य निर्गमनं निवारयितुम् इच्छन् राजा राज्ञीम् अभ्यर्थितवान् यत् योग्येन बोधनेन भवती तं निवारयतु इति ।

किन्तु धर्मबुद्धिः राज्ञी एतत् अपालयन्ती पुत्रम् आशिषा अनुगृह्य अवदत् - ''वत्स ! भवान् धर्मात्मा अस्ति । पवित्रं जीवनं यापयन् भवान् सद्गतिं प्राप्नोतु'' इति ।

एतदनन्तरं सुमनस्कः हिमालयं गत्वा विश्वकर्मणा निर्मिते कुटीरे वसन् तपसि लीनः जातः ।

राजा धूर्तस्य योगिनः मरणदण्डनम् आदिष्टवान् । देशे नियमं च कृतवान् यत् कोऽपि कस्मैचित् अपि योगिने आश्रयं न दद्यात् इति ।

दुष्टबुद्धेः धूर्तस्य एकस्य योगिनः कारणतः समग्रे राज्ये योगिषु अनादरः उत्पन्नः । तस्मिन् राज्ये पुनः कदापि योगिनः आश्रयम् आदरं वा न प्राप्तवन्तः ।





# विष्णुपुराणम्

शकुनिः गान्धारदेशस्य राज्ञः सुबलस्य पुत्रः । दुर्योधनस्य माता गान्धारी शकुनेः अग्रजा । ज्यौतिषिकाः राजानं सुबलं सूचितवन्तः आसन् यत् विवाहसमनन्तरम् एव गान्धार्याः पतिः मृतः भविष्यति इति । अतः राजा सुबलः कस्यचित् अजस्य गान्धार्याः च विवाहम् आदौ निर्वर्तितवान् । अनन्तरं जन्मान्धेन धृतराष्ट्रेण सा परिणीता । जातकफलं सत्यम् अभवत् । अल्पे एव काले सः अजः मृतः ।

विवादसमये भीमः यदा – 'विधवापुत्र ! गोलक !' इति सम्बोधितवान् तदा एव दुर्योधनः पूर्वोक्तं विषयं ज्ञातवान् ।

एतेन दुर्योधनः कुपितः । सुबलं शकुनिं च कारागारे स्थापितवान् सः । क्रूरदण्डनैः तयोः दण्डनेन मनःसन्तोषः प्राप्तः तेन ।

सुबलः तपोबलेन अपूर्वशक्तिं सम्पादितवान् आसीत् । मरणतः पूर्वं सः शकुनिम् उक्तवान् – ''मम मरणस्य अनन्तरं मदीयैः अस्थिभिः अक्षान् कारयतु'' इति ।

दुर्योधनः कारागारस्य रक्षकाणां द्वारा, शकुनेः समीपे स्थितानाम् अद्भुतमहिमशालिनाम् अक्षाणां विषयं ज्ञातवान् । तद्दिने एव शकुनेः बन्धविमोचनं जातम् । शकुनिः मन्त्रिपदे नियोजितः तेन ।

हस्तिनापुरे शकुनि-युधिष्ठिरयोः मध्ये द्यूतं प्रवृत्तम् । द्यूते युधिष्ठिरः पराजितः अभवत् । स्वसहोदरान् पत्नीं द्रौपदीं च पणीकृत्य तत्रापि पराजयं प्राप्तवान् सः ।

अस्मिन् एव समये द्वारकायां कृष्णः विनोदार्थं द्यूतं क्रीडन् पराजितः अभवत् । रुक्मिण्यादयः सप्त पत्न्यः अपि तत्समये



पणत्वेन स्थापिताः आसन् । परिहसन्ती सत्यभामा रुक्मिणीम् उद्दिश्य – ''भगिनि ! अस्मदीयः नाथः भवत्यः च इदानीं मम अधीनाः सन्ति । इदानीं भवताम् उपरि मम सर्वाधिकारः अस्ति । विक्रयणं दानं वा अहं कर्तुम् अर्हामि'' इति वदन्ती रुक्मिण्याः अञ्चलं स्वहस्तेन गृहीतवती ।

तदानीं श्रीकृष्णः अन्यत्र आसक्तः इव ''अक्षया भवतु'' इति उक्तवान् ।

कृष्णस्य मुखतः एतत् शब्दद्वयम् अपि किमर्थं निर्गतम् इति कयाचिदपि न ज्ञातम् ।

अस्मिन् एव समये हस्तिनापुरे सभायां दुश्शासनः द्रौपद्याः वस्त्रापहरणं कर्तुम् उद्युक्तः आसीत् । असहाया द्रौपदी आत्मनः मानं रक्षितुम् असमर्था, करद्वयं योजयित्वा भक्त्या 'कृष्ण !' इति कृष्णनाम स्मृतवती ।

अस्यां सभायां भीमः प्रतिज्ञां कृतवान् यत् दुःशासनस्य उरःस्थलं विभिद्य रक्तं पिबामि, दुर्योधनस्य ऊरुभङ्गं करोमि इति ।

कृष्णस्य वरप्रसादतः द्रौपद्याः शाटिका अक्षया जाता । यथा यथा दुष्टः दुःशासनः शाटिकाम् आकृष्टवान् तथा तथा सा दीर्घा जाता ! सभायां शाटिका राशिरूपेण पतिता । दुःशासनः वस्त्रापहरणेन श्रान्तः । स्वेदजलेन आर्द्रीभूतः सः तत्रैव भूमौ पतितः ।

पूर्वं मयसभायां भ्रान्त्या कृतं दुर्योधनस्य विपरीतं व्यवहारं दृष्ट्वा द्रौपदी उच्चैः हसितवती आसीत् । तदा एव दुर्योधनः प्रतिज्ञां कृतवान् आसीत् यत् द्रौपद्याः अपमानं करिष्यामि एव इति । इदानीं तु वस्त्रापहरणे सः असफलः । एतेन लज्जितः सः सभाभवनतः निर्गतः । कर्ण-शकुनि-दुश्शासनादयः अपि तम् अनुसृतवन्तः ।

दुर्योधनः, शकुनिः, कर्णः, दुश्शासनः इति एते चत्वारः दुष्टचतुष्टयत्वेन ख्याताः । क्रोध-लोभ-मद-मत्सरादीनां दुर्गुणानाम् अधर्मस्य च आकरः कलिपुरुषः दुर्योधन-रूपेण जन्म प्राप्तवान् आसीत् ।

नरनारायणाभ्यां सह प्रवृत्ते युद्धे सहस्र-कवचः अवशिष्टेन अन्तिमेन कवचेन सह पालायनं कृत्वा सूर्यमण्डले आश्रयं प्राप्तवान् आसीत् । अनन्तरकाले सः अविवाहितायाः कुन्तीदेव्याः उदरे सूर्यस्य वरप्रसादेन कर्ण-रूपेण जन्म प्राप्तवान् ।

कुन्ती यदा पाण्डुराजस्य पत्नी जाता, तदा नरनारायणयोः अन्यतरः नरः कुन्तीदेव्याः गर्भतः अर्जुनरूपेण जन्म प्राप्तवान् ।

नारायणः तु साक्षात् कृष्णः एव । अर्जुनः कृष्णस्य पितृष्वसुः पुत्रः ।

अविवाहिता कुन्ती कर्णं जले त्यक्तवती आसीत् । सः सूतपत्न्या राधया प्राप्तः । सा कर्णस्य पालनं पोषणं च कृतवती ।

अतः एव कर्णस्य 'सूर्यपुत्रः' 'राधेयः' इति च नाम । दुर्योधनेन कर्णः अङ्गदेशस्य आधिपत्ये नियोजितः । एतेन कर्णस्य आत्मग्लानिः दूरं गता । दुर्योधनः कर्णस्य मैत्रीं गौरवास्पदं मन्यते स्म ।

कर्णः बहुधा शापैः पीडितः आसीत् । दानशूरः सः ब्राह्मणयाचकरूपेण आगताय इन्द्राय स्वकीयं कवचकुण्डलादिकं दत्तवान् एव । तथापि स्वशक्तिविषये अचलं विश्वासं प्रदर्शयन् सः दुर्योधनं सर्वदा प्रोत्साहितवान् ।

'प्रतिद्वन्द्वी अर्जुनः जेतव्यः' इत्येव कर्णस्य इच्छा आसीत् । अतः सः दुर्योधनस्य पक्षम् आश्रितवान् । द्यूते पराजिताः पाण्डवाः वनवासार्थं निर्गताः ।

द्यूते विजितवती सत्यभामा कृष्णं नारदाय दानरूपेण दत्त्वा 'पुण्यक'व्रतम् आचरितवती । तदा नारदः उक्तवान् - ''कृष्णस्य यावान् भारः अस्ति तावन्मितानि सुवर्णरत्नादीनि दत्तानि चेत् कृष्णं प्रत्यर्पयिष्यामि'' इति ।

सत्यभामा एतत् अङ्गीकृतवती । स्वीयानि स्वर्णाभरणरत्नहारादीनि सर्वाणि सा तुलायां स्थापितवाती । तथापि कृष्णः एव भारायते ! तदा रुक्मिणी भक्त्या एकं तुलसीपत्रं तुलायां स्थापितवती । तदानीं भारः समः अभवत् । कृष्णः नारदात् मुक्तः ।



एतत् दृष्ट्वा सत्यभामा रुक्मिणीम् उक्तवती - ''भगिनि ! अद्य आरभ्य अहं भवत्याः दासी । श्रीकृष्णः भक्तानाम् अधीनः इत्येतत् सत्यम् अद्य भवती मां ज्ञापितवती । बहुधा उपकृता अहम्'' इति ।

द्रौपदीसहिताः पाण्डवाः सर्वे मत्स्यदेशे विराटस्य आस्थाने अज्ञातवासम् आचरितवन्तः । तत्र भीमः वललनाम्ना पाचककार्यं कृतवान् । द्रौपदी सैरन्ध्रीरूपेण राज्ञ्याः दासी जाता । ताम् अपमानयन्तं कीचकं भीमः मारितवान् । एवं समबलेषु पञ्चसु त्रयः भीमस्य हस्तात् एव मृताः । इतः परं दुर्योधनः एकः एव अवशिष्टः ।

बृहन्नलानाम्ना अर्जुनः राजकुमारीम् उत्तरां नृत्यं पाठितवान् । उत्तरगोग्रहणसमये अर्जुनः निजरूपं प्रदर्शयन्, युद्धे असङ्ख्यान् महा-



रथिनः अपि विनायासं जितवान् ।

श्रीकृष्णः यदा कंसं मारितवान्, तदा कालनेमिः कंसस्य शरीरं त्यक्त्वा अभिमन्युरूपेण सुभद्रायाः गर्भतः जन्म प्राप्तवान् ।

कालनेमिः इदानीं कृष्णस्य बन्धुरूपेण जन्म प्राप्तवान् अस्ति । अतः कृष्णः चिन्तयति स्म यत् अभिमन्युः युववीराणाम् आदर्शः भूत्वा शाश्वतं यशः प्राप्नोतु इति ।

यदा सुभद्रा गर्भवती आसीत् तदा एकस्मिन् दिने अर्जुनः सुभद्राम् उद्दिश्य युद्धे पद्मव्यूहभेदनरहस्यं वदन् आसीत् । तदा तत्र आगतः कृष्णः - ''अर्जुन ! मम भगिन्याः मनः अतीव कोमलम् । तत्रापि गर्भिणी एषा । एतादृश्याः पुरतः किमर्थं वा युद्धरङ्गस्य वार्ता निवेद्यते भवता ?'' इति उक्त्वा कार्यान्तरव्याजेन अर्जुनम् अन्यत्र नीतवान् ।

गर्भस्थः अभिमन्युः अर्जुनस्य सर्वाणि वचनानि श्रुतवान् आसीत् । किन्तु पद्मव्यूहतः बहिः आगमनरहस्यं ज्ञातुं सः न शक्तवान् ।

यौवनमदभरितः अभिमन्युः कदाचित् धर्मराजं वदन् आसीत् - ''मातुलः कृष्णः इदानीम् अत्र न स्यात् नाम । तथापि इदं राज्यम् अस्मदीयम् एव । कौरवान् सर्वान् मारयितुम् अहम् एकः एव पर्याप्तः'' इति ।

तदा तत्र आगतः कृष्णः एतत् वचनं श्रुत्वा उक्तवान् - ''वीर ! अभिमन्यो ! भवतः शौर्यम् असदृशम् । भवादृशस्य वीरस्य कीर्तिः चिरकालं स्थास्यति । भवदीया माता सुभद्रा मदीया भगिनी अस्ति यत् तस्मात् अहम् आनन्दं गर्वं च अनुभवामि'' इति ।

सुभद्रार्जुनयोः पुत्रस्य अभिमन्योः विवाहः उत्तरया सह सम्पन्नः । पाण्डवानां वनवाससमये सुभद्राभिमन्युभ्यां द्वारकायाम् एव स्थितम् ।

बलरामः निश्चितवान् यत् पुत्री शशिरेखा दुर्योधनस्य पुत्राय लक्षणाय दातव्या इति । अभिमन्यवे उत्तरा यत् दत्ता तत्र बलरामस्य विरोधः आसीत् ।

कदाचित् अभिमन्युः मात्रा सह द्वारकातः निर्गतः सन् अरण्यमार्गेण कुत्रापि गच्छन् आसीत् । मार्गे हिडिम्बाभीमसेनयोः पुत्रः घटोत्कचः मिलितः । सः शशिरेखायाः विवाहस्थलं गतवान् । तत्र स्वमायया वरपक्षीयान् सर्वान् सः पीडितवान् । अनन्तरं शशिरेखाम् उन्नीय गतवान् । अभिमन्युशशिरेखयोः विवाहः कारितः तेन ।

पाण्डवानाम् अज्ञातवासः सफलतापूर्वकं समाप्तः । अनन्तरं कौरवपाण्डवाः परस्पर-

नाशार्थं सिद्धाः जाताः । कौरवपाण्डवयोः युद्धं निश्चितम् । कदाचित् युद्धार्थं साहाय्यं प्रार्थयमानः अर्जुनः कृष्णस्य समीपम् आगतवान् । तदा दुर्योधनः अपि तेन एव उद्देशेन तत्र आगतवान् । निद्रातः जागरितः कृष्णः पादसमीपे उपविष्टम् अर्जुनं दृष्टवान् । अनन्तरं शिरसः पार्श्वे उपविष्टस्य दुर्योधनस्य उपरि दृष्टिं प्रसारितवान् ।

कृष्णः उभौ अपि उद्दिश्य उक्तवान् - ''युद्धे अहम् अस्त्रशस्त्रादीनि न गृह्णामि । भवतोः अन्यतरस्य पक्षं प्रवेष्टुम् अर्हामि । अन्यस्मिन् पक्षे समग्रा यादवसेना स्थास्यति । अहम् आदौ अर्जुनं दृष्टवान् । अतः सः आदौ स्वीयाम् इच्छां प्रकटयतु'' इति ।

''कृष्णः एव मम पक्षे भवतु'' इति उक्तवान् अर्जुनः । 'समग्रा यादवसेना मम पक्षे भविष्यति' इति चिन्तयन् सन्तुष्टः दुर्योधनः ततः निर्गतः ।

सञ्जयः धृतराष्ट्रस्य आदेशानुसारं दूतरूपेण पाण्डवानां समीपम् आगतवान् । ''युद्धेन उभयपक्षस्य अपि हानिः एव । अतः सन्धिः एव गरीयान्'' इति उपदेशवाक्यानि उक्तवान् ।

पाण्डवाः श्रीकृष्णं दूतरूपेण प्रेषितवन्तः । कौरवसभायां कृष्णः उक्तवान् - ''अर्धराज्यं न दीयते चेत् मास्तु नाम । न्यूनातिन्यूनं इन्द्रप्रस्थादीन् पञ्च ग्रामान् वा ददातु । उभयोः पक्षयोः मध्ये शान्तिः स्थापनीया इति उद्देशेन अहम् आगतवान् अस्मि । यथाकथञ्चित् सन्धिः अङ्गीकरणीयः'' इति ।

दुर्योधनः कृष्णस्य हितवचनानि तिरस्कृतवान् । सः स्पष्टवचनैः उक्तवान्- ''पञ्च ग्रामाः किं, सूच्यग्रमिता भूमिः अपि पाण्डवानां



कृते न दास्यते'' इति ।

तदा श्रीकृष्णः कौरवसभाम् उद्दिश्य गम्भीरया वाण्या उक्तवान् - ''अहम् अर्जुनस्य सारथिः भविष्यामि । अर्जुनः गाण्डीवधनुः हस्तेन गृहीत्वा सर्वान् भवत्पक्षीयान् तृणवत् छेत्स्यति । तदानीं भवतां पक्षे कर्णसदृशाः दशसहस्रं महारथिनः भवन्ति चेदपि युद्धरङ्गं प्रविष्टः भवदीयः यः कोऽपि ततः सजीवं न निर्गमिष्यति इति तु निश्चितम् एव । अतः इदानीम् एवं जागरिताः भवन्तु'' इति ।

कृष्णस्य वचनानि श्रुत्वा कुपितः दुर्योधनः गर्जितवान् - ''रे कृष्ण ! दूतरूपेण आगतः भवान् पाण्डवानां पक्षस्य शौर्यं प्रशंसन् अस्मान् किं निन्दति ? कियत् धैर्यं भवतः ? अहम् इदानीं भवन्तं रज्ज्वा बद्ध्वा स्थापयामि । कः भवन्तं विमोचयति इति पश्यामि'' इति ।

एवं वदन् दुर्योधनः रज्जुं गृहीत्वा आगतवान् । एतत् दृष्ट्वा कृष्णेन सह आगतः सात्यकिः कोपेन खड्गं कोषात् आकृष्टवान् ।

तदा कृष्णः सात्यकिं समाश्वास्य दुर्योधनम् उक्तवान् - ''सन्धिं सम्पादयितुम् इच्छन् अहं दूतरूपेण रिक्तहस्तः आगतवान् । एतादृशस्य मम बन्धनम् अनुचितम् । तथापि यदि बन्धुम् इष्यते, तर्हि तत् क्रियतां नाम'' इति ।

अनन्तरं दुष्टचतुष्टयेन कृष्णं परितः आगत्य तं बन्द्धुं चेष्टा कृता । तदा कृष्णः स्वस्य महिमानं प्रदर्शयन् विश्वरूपं धृतवान् । एतत् दृष्ट्वा भीताः ते ततः पलायितवन्तः ।

सामदानादयः उपायाः अपि असफलाः जाताः इत्यतः अनिवार्यतया युद्धं घोषितम् ।

स्वकीयेन समस्तेन सेनाबलेन सह सर्वे राजानः कुरुक्षेत्रे सम्मिलिताः । उभयपक्षे अपि युद्धसन्नाहः विशेषतया प्रवृत्तः आसीत् । रथानां घण्टानादैः, सैनिकानां जयघोषैः, रणवाद्यानां शब्दैः च रणरङ्गं व्याप्तम् ।

सञ्जयः दिव्यदृष्टिं प्राप्तवान् आसीत् । तद्द्वारा सः धृतराष्ट्रस्य पुरतः कुरुक्षेत्रयुद्धस्य समग्रं चित्रणं करोति स्म । जन्मान्धः पुत्रप्रेमवशीभूतः कौरवचक्रवर्ती धृतराष्ट्रः युद्धं निवारयितुम् असमर्थः आसीत् । सः सञ्जयस्य वचनानि शृण्वन् मौनेन उपविष्टः । वस्त्रेण नेत्रयोः बन्धनं कृतवती गान्धारी अपि पुत्राणां विनाशस्य सम्भावनया व्यथिता सती मौनेन युद्धवार्तां शृणोति स्म ।





# शङ्करस्य सामर्थ्यम्

शिवरामनामकस्य पुत्रः शङ्करः । मम पुत्रः सर्वस्मिन्नपि कार्ये असमर्थः इत्येव शिव-रामस्य चिन्तनम् । अतः एव सः लघुषु अपि विषयेषु पुत्रं निन्दन्, तर्जयन् च भवति स्म । अनेन कारणेन शङ्करः वस्तुतः अपि निरुपयोगः सञ्जातः । एवं पुत्रस्य निरुप-योगत्वस्य कारणं स्वयं पिता एव जातः ।

गच्छता कालेन शङ्करस्य निरुपयोगता अधिका जाता । तस्य बुद्धिः मन्दा जाता अपि । तथापि एकस्यां विद्यायां महत् प्रावीण्यम् आसीत् तस्य । जलाशये मज्जनं कुर्वन् जलस्य अन्तः श्वासनियन्त्रणं कृत्वा बहुकालं यावत् जले एव स्थातुम् अर्हति स्म सः । पिता अस्मिन् विषये हस्तक्षेपं न कृतवान् इत्यतः शङ्करः तस्यां विद्यायां दक्षः सञ्जातः ।

शिवरामः निश्चितवान् यत् यदि एषः पुत्रः विवाहितः भवेत् तर्हि एतस्य स्थितिः उत्तमा भवेत् इति । शिवरामस्य पत्नी पूर्वमेव दिवं गता आसीत् । अतः गृहकार्याणि सर्वाणि शिवरामेण एव क्रियन्ते स्म । अतः सः अचिन्तयत् यत् यदि स्नुषा आगच्छेत् तर्हि गृहकार्यात् मम विमुक्तिःभवेत्, विश्रान्तिः च लभ्येत इति । किन्तु ग्रामीणः कोऽपि स्वपुत्रीं शङ्कराय दातुं न सिद्धः ।

कदाचित् शिवरामेण वार्ता ज्ञाता यत् पार्श्वग्रामे काचित् वधूः अस्ति इति । तत्र गमनात् पूर्वं शिवरामः पुत्रं शङ्करम् उक्तवान् – ''तत् गृहं प्रति गमनानन्तरं पादरक्षा द्वारस्य पृष्ठतः स्थापनीया । आसन्दे उपवेष्टव्यम् । प्रश्नस्य समुचितम् उत्तरं दातव्यम्'' इति ।

पितुः वचनं समग्रं शङ्करः सश्रद्धं श्रुत्वा अङ्गीकारपूर्वकं शिरः चालितवान् । पितुः वचनानि एव मनसि पुनः पुनः उच्चारितवान् इति कारणात् कदा किं करणीयम् इति विषये अस्तव्यस्तता सञ्जाता ।

यदा वधूगृहं प्राप्तं तदा आदौ शङ्करः



स्वस्य पादरक्षे आसन्दे संस्थाप्य स्वयं द्वारस्य पृष्ठभागे उपविष्टवान् ।

शङ्करस्य अनेन व्यवहारेण वध्वाः पिता सर्वं ज्ञातवान् । अतः सः स्वपुत्रीं दर्शयितुम् अनिच्छन् शिवरामं भर्त्सयन् उक्तवान् - ''एतादृशाय अहं कन्यां न दास्यामि । अस्मिन् एव क्षणे भवान् इतः बहिर्गच्छतु'' इति ।

गृहं प्रति आगमनस्य अनन्तरं शिवरामः शङ्करं निन्दन् उक्तवान् - ''मया उक्तं सर्वमपि भवता विपरीतं कृतम् । अस्मिन् जन्मनि भवतः विवाहः न भविष्यति, कोऽपि मूर्खः एव स्वपुत्रीं भवते दद्यात्, न अन्यः'' इति ।

एतत् श्रुत्वा शङ्करः अचिन्तयत् यत् मया तादृशस्य मूर्खस्य अन्वेषणं करणीयम् इति । अतः सः तस्यामेव रात्रौ गृहतः प्रस्थितः । दिनत्रयं यावत् तेन प्रयाणं कृतम् । चतुर्थे दिने सायं कस्यचन पर्वतप्रदेशस्य भागं सः प्राप्तवान् । तत्र कस्याश्चित् गुहातः कश्चन विचित्रः ध्वनिः तेन श्रुतः । तस्यां गृहायां कश्चन घोरः राक्षसः निद्राति स्म । तस्य घोरिकाशब्दः आसीत् सः ।

शङ्करः गुहां प्रविष्टः । तं राक्षसं दृष्ट्वा सः चिन्तितवान् - 'पित्रा सूचितः जनः एषः एव स्यात्' इति । अतः सः स्वगतम् उक्तवान् - 'अहं योग्यं स्थलमेव आगतः । अनेन पूर्वमेव ज्ञातं स्यात् यत् मया अत्र आगम्यते इति । अतः एव अयं गुहायाम् एवं निलीय स्थितः अस्ति' इति । अतः सः राक्षसं केशेषु गृहीत्वा वेगेन कर्षन् बहुधा पीडितवान् ।

राक्षसः जृम्भणं कुर्वन् निद्रातः उत्थाय उच्चैः आक्रोशन् - ''केन मूर्खेण अहम् उत्थापितः ?'' इति गर्जितवान् ।

''भोः मूर्ख ! स्वस्य पुत्र्या सह मम विवाहम् अकृत्वा कुत्र धाव्येत भवता ? वरदक्षिणां दत्त्वा शीघ्रमेव मम विवाहः निर्वर्त्यताम्'' इति वदन् शङ्करः राक्षसस्य कर्णं लुण्ठितवान् ।

अनेन राक्षसः नितरां क्रुद्धः । सः शङ्करं चूर्णीकृत्य खादितुम् ऐच्छत् । तावता तस्य पत्नी तत्र आगता । सा शङ्करस्य वचनानि श्रुतवती । तस्याः एका पुत्री आसीत् । सा स्थूला । अत एव महान् प्रयत्नः कृतश्चेदपि तस्याः विवाहः न जातः आसीत् ।

अतः बहिः आगता सा पतिम् उक्तवती - ''भवतः बुद्धिः नास्ति किम् ? जामाता स्वयम् आगतः अस्ति । तस्य सत्कारः अस्माभिः करणीयः'' इति ।

''तदस्तु नाम । कन्या क्व गता ?'' इति वदन् शङ्करः राक्षसम् आपादमस्तकं दृष्टवान् ।

''सा बहिः गता अस्ति । द्वित्रघण्टाभ्यन्तरे आगमिष्यति सा । भवान् बहुधा श्रान्तः इव भासते । अतः कृपया आहारं स्वीकृत्य किञ्चित् विश्रान्तिसुखम् अनुभवतु'' इति राक्षसी शङ्करम् उक्तवती । शङ्करः राक्षस्या दत्तं फलं खादित्वा क्षीरमपि पीत्वा गृहाभ्यन्तरे प्राणिनां चर्मणः उपरि सुखेन शयितवान् ।

शङ्करः दृढशरीरः । अतः तं खादितुम् इष्टवान् राक्षसः । किन्तु राक्षसी तदर्थम् अनुमतिं न दत्तवती । उभौ अपि गुहायाः अन्तः उपविष्टवन्तौ ।

राक्षस्याः पुत्री मध्यरात्रे आगत्य महान्तं कोलाहलं कृतवती । तस्याः कोलाहलस्य कारणतः शङ्करस्य निद्रा भग्ना । सः उत्थाय मातापुत्र्योः सम्भाषणं समग्रं श्रुतवान् ।

''बहूनां वर्षाणाम् अनन्तरं भवतीम् अन्विष्य वरः स्वयम् आगतः अस्ति'' इति माता सानन्दं पुत्रीम् उक्तवती ।

''कुत्र सः ?'' इति पृच्छन्ती एव पुत्री शङ्करस्य आवासप्रकोष्ठम् आगता ।

शङ्करः किञ्चिदिव नेत्रे उद्घाट्य तां दृष्ट्वा भीतः अभवत् । राक्षसयोः यावती कुरूपिता ततोऽपि अधिका कुरूपिता आसीत् तस्याः ।

शङ्करं पश्यन्ती सा राक्षसपुत्री उक्तवती – ''अयं नवनीतमिव अस्ति'' इति ।

''एतं खादितुम् इच्छा न उत्पन्ना किल भवत्याम् ? यदि एषः न अङ्गीक्रियेत तर्हि अन्यः कोऽपि वरः न लभ्येत एव'' इति राक्षसी पुत्रीं बोधितवती ।

''अस्तु । अहम् एतं किमपि न करोमि । किन्तु पिता किम् एतं न खादेत् ?'' इति पृष्टवती सा पुत्री ।



''अत एव अहम् अत्रैव उपविष्टा अस्मि अस्य रक्षणं कुर्वती । अहम् इदानीं किञ्चित् अटितुं गच्छामि । भवती अस्य रक्षणं करोतु'' इति वदन्ती राक्षसी बहिर्गता ।

राक्षसपुत्री पुनः पुनः शङ्करं पश्यन्ती मनसि जातां खादनेच्छां निग्रहीतुं न शक्ता एव । 'यदि अहम् एतम् अत्रैव खादेयं तर्हि माता मां ताडयेत्' इति चिन्तयित्वा सा शङ्करम् उत्थाप्य उक्तवती – ''आगच्छतु । विवाहार्थं सर्वं सिद्धम्'' इति ।

शङ्करः तस्याः वक्रबुद्धिं ज्ञातवान् । अतः तेन उक्तम् – ''भोः, आदौ वरदक्षिणाधनम् आनीयताम् । तदनन्तरम् एव विवाहः'' इति ।

राक्षसपुत्री अन्तः गत्वा चर्मणः स्यूते बहूनि रत्नानि, सुवर्णाभरणानि च पूरयित्वा आगता । तं स्यूतं शङ्करस्य हस्ते स्थापितवती सा । अनन्तरम् उभावपि ततः निर्गतौ ।

गृहात् बहिः आगत्य शङ्करः राक्षसपुत्रीम् उक्तवान् – ''स्नानं विना क्रियमाणः विवाहः न शास्त्रसम्मतः । अतः मया आदौ स्नानं करणीयम्'' इति ।

राक्षसपुत्री तं कञ्चन सरोवरं नीतवती । आभरणैः सहितं स्यूतं स्वीकृत्यैव शङ्करः जले मज्जनं कृतवान्, जलस्य अधोभागे उपविष्टवान् च ।

राक्षसपुत्री बहुकालं यावत् तस्य निरीक्षां कृतवती । किन्तु शङ्करः बहिः न आगतः एव । जलविषये महती भीतिः तस्याः । 'जले निमग्नः शङ्करः तत्रैव मृतः स्यात्, श्वः प्रातः शवः उपरि आगच्छेत् एव । तदा तं खादिष्यामि' इति विचिन्त्य सा गृहं प्रतिगतवती ।

राक्षसपुत्र्याः गमनानन्तरं शङ्करः जलात् स्वशिरः उन्नमय्य सर्वत्र दृष्टवान् । राक्षसपुत्री कुत्रापि न दृष्टा । सा इतः गता इति निश्चित्य सरोवरात् बहिः आगत्य सः सस्यूतं गृहं प्रत्यागतवान् ।

धनवतः शङ्करस्य विवाहः निश्चितः एव । शिवरामः ज्ञातवान् यत् मया कृतस्य कठोरस्य नियन्त्रणस्य कारणात् एव शङ्करः निरुपयोगः जातः, सः निरुपयोगः सर्वथा न, प्रत्युत समर्थः एव इति ।

शङ्करः अचिरात् एव स्वस्य योग्यतां प्रमाणीकृतवान् ।



# आर्यः

## अज्ञातराजकुमारस्य रहस्यम्

22

शान्तिपुरस्य सिंहासनम् अपहृतवान् वीरसिंहः वार्ता प्राप्तवान् यत् जयनगरे खननसमये सुवर्णप्रतिमा प्राप्ता इति । अतः सः सेनापतिं जब्बरसिंहं प्रतिमायाः आनयनाय प्रेषितवान् । दलपतिः सुखदेवः रक्तपातम् अनिच्छन् प्रतिमायाः नयनम् अङ्गीकरोति । किन्तु नौकया नयनसमये सा अदृश्यतां गता । तदनन्तरं वीरसिंहेन वार्ता प्राप्ता यत् अचिरात् एव प्रतिमा मन्दिरे प्रतिष्ठापयिष्यते इति । दलपतेः पुत्री सुकन्या प्रतिमायाः रक्षणाय वीरसिंहस्य परिणयम् अङ्गी-करोति ।

चित्रम् - गान्धि-अय्यः

सुखदेवः सुकन्यायाः निर्णयस्य विषये आतङ्कग्रस्तः अस्ति ।

वत्से ! किं भवती एतद्विषये सम्यक् विचिन्त्य निर्णीतवती ?

आम्, तात ! एतस्मात् प्रतिमायाः रक्षणं भविष्यति इत्यतः अहम् एतदर्थं सज्जा ।

राजकुमारि ! युक्तम् उक्तं भवत्या । भवती पट्टमहिषी सती सुखेन यथा स्यात् तथा व्यवस्थाम् अहं करिष्यामि ।

मम पुत्री पूजां समापयतु नाम ।

एतस्याः स्वागताय अहं योग्यां व्यवस्थां कर्तुं पूर्वमेव राजधानीं गमिष्यामि । मम सेनापतिः अत्र भविष्यति ।

वीरसिंहः अश्वम् आरुह्य जब्बरसिंहं स्वसमीपम् आहूय आदिशति ।

अहम् एकं गजं प्रेषयिष्यामि । भवता रक्षकत्वेन तिष्ठता राजपुत्री आनेतव्या ।

अस्तु महाराज !

वीरसिंहस्य निर्गमनस्य अनन्तरं दलपतिः सुकन्या च तत्र भवतः, न अन्यः कोऽपि ।

अहम् आर्यस्य परामर्शस्य अनुगुणं कार्यं कुर्वती अस्मि । प्रतिमायाः संरक्षणं तेनैव कृतम् इत्येतत् न विस्मर्तव्यम् अस्माभिः ।

पूजार्थं गच्छाव तावत् ।

मन्दिरे जयानन्दमुनेः साहाय्यम् आचरन् अस्ति राजकुमारः आर्यः । स्वर्णप्रतिमा महाप्रभावयुक्ता विराजते ।







मुनिः जयानन्दः नीराजयति ।



पवित्रस्य प्रसादस्य स्वीकाराय जनाः पङ्क्तिशः तिष्ठन्ति ।




पूजायाः समाप्तेः अनन्तरं मुनिः जयानन्दः सुखदेवं सुकन्यां च स्वसमीपम् आह्वयति ।









सुकन्या जयानन्दमुनेः आशीर्वादं प्राप्नोति ।




जयानन्दः स्वशिष्यम् आह्वयति ।




शोभायात्रा अनुवर्तते । केचन सैनिकाः अग्रभागे भवन्ति । अन्ये केचन सैनिकाः सेनापतिः जब्बरसिंहः च पृष्ठभागे भवन्ति ।



गोविन्दः गुप्तरूपेण शोभायात्रायाः अनुसरणं करोति अवधानपूर्वकम् ।



अकस्मात् ...




सुकन्या कञ्चित् वृक्षम् अवलम्बते ।



जब्बरसिंहः चिन्ताक्रान्तः भवति ।

राजकुमारि ! अस्माभिः अविलम्बेन गन्तव्यम् । राजा प्रतीक्षते तत्र ।

अहं श्रान्ता इति उक्तं खलु मया ?

प्रस्थीयताम् । अस्माभिः समयः न व्यर्थीकरणीयः ।

धिक् त्वाम् । हस्तः अपनीयताम्

अकस्मात् कुतश्चित् आगतः कश्चन वानरः जब्बरसिंहम् आक्रामति ।

कः एषः ? हन्त ...

जब्बरसिंहः भूमौ पतति, अचेतनश्च भवति । अश्वः पलायते । सैनिकाः इतस्ततः धावन्ति ।

अहो

वानरः राजकुमारम् आर्यम् अभिजानाति ।

उत्तमं कार्यं कृतम् । प्रतिगन्तुम् अर्हति भवान् ।

सुकन्या किञ्चित् निश्चिन्तताम् अनुभवति । तस्याः आश्चर्यमपि भवति ।

आर्य ! मया ज्ञायते स्म यत् भवान् मां रक्षिष्यति एव इति ।

मया न, भगवत्या रक्षिता भवती । तस्याः आशीर्वादः भवतीं रक्षिष्यति सदापि ।

आर्यः शिष्यस्य दिशि पश्यति ।

गोविन्द ! भवान् एतां दलपतिसमीपं नयतु । अहम् आश्रमं गमिष्यामि ।

गच्छामि । एषा तु निरपाया ।

अत्र स्थातुं नायं समयः । भवती त्वरया पितुः समीपं गच्छेत् ।

सुखदेवः स्वस्य अङ्गरक्षकस्य पादध्वनिं शृणोति ।

धर्मपाल ! का विशेषवार्ता ?

राजकुमारी किं प्रत्यागता अस्ति ?

अनुवर्तते

## मानवनिर्मितं महाद्भुतम् - ५



# गोलभवनम्

बिजापुरं, यच्च कर्णाटके अस्ति (मुम्बयीतः ३०० मैल्दूरे अस्ति) १६ शतके मुस्लिम्-राजानां राजधानी आसीत् । युसुफ् आदिलशाहः बिजापुरदेशं स्वतन्त्रराज्यत्वेन परिकल्पितवान् ।

अत्रत्येषु भवनेषु 'गोलभवनम्' (गोल-गुम्बज्) अन्ताराष्ट्रियां ख्यातिं प्राप्तवत् अस्ति । एतत् आदिलशाहस्य स्मारकम् । १६५६ तमे वर्षे एतस्य निर्माणं समाप्तिम् अगात् ।

एतत् वर्गाकारम् अस्ति । ६०० पादोन्नतस्य भवनस्य उपरि गोलाकारिका रचना अस्ति । तस्याः चतसृषु दिक्षु चतस्रः स्तम्भरचनाः सन्ति । एतासु अष्टौ अट्टाः सन्ति ।

भवनस्य अन्तः वर्गाकारकं सभाभवनं दृश्यते । तस्य आकारः १३५ X १३५ पादात्मकः । एतस्य उपरि एव गोलाकारिका रचना अस्ति । एतादृशी विशाला गोलाकारिका रचना अन्या नास्ति । एतस्य सभाभवनस्य व्यासः १२४ पादात्मकः । औन्नत्यं च १७८ पादात्मकम् । बहिर्भागतः यदि माप्येत तर्हि एतस्य समग्रस्य भवनस्य औन्नत्यं १९८ पादात्मकं भवेत् ।

बिजापुरे अन्यानि अपि बहूनि प्राचीनानि भवनानि सन्ति ।

# पृष्टोऽयं भवताम् पृष्टोऽयं भवताम्

## भवदर्थ विज्ञानम्

### वृक्षाणाम् आयुषः ज्ञानम्



कालनिर्णयाय यत् शास्त्रम् अस्ति तत् 'chronology' शब्देन निर्दिश्यते । एषु दिनेषु एतादृशः एव अपरः शब्दः श्रूयते 'Dedro chronology' इति । एतस्य अर्थः कः ? उद्देशः च कः ? वृक्षाणां वयसः निर्णयाय स्थितं शास्त्रम् एतत् ।

वृक्षस्य प्रकाण्डे वलयाकाराः भवन्ति बहवः । एते वलयाकाराः वृक्षस्य समग्रम् इतिहासं वक्तुम् अर्हन्ति । एतेषाम् अध्ययनतः वृक्षस्य जीवितकालः, रोगपीडा इत्यादयः अवागन्तुं शक्याः । वृक्षस्य नाशनं विनैव एतेषां वलयाकाराणाम् अध्ययनाय विज्ञानिनः 'coring' नामकं क्रमम् अन्विष्टवन्तः सन्ति । वृक्षस्य प्रकाण्डमध्यं प्रति यन्त्रविशेषं रन्ध्र-निर्माणद्वारा सम्प्रेष्य ते वलयाकाराणाम् अध्ययनं कुर्वन्ति ।

## भवतां परिसरः

### अवरुद्धजलं शरीरम्

'एषु दिनेषु कश्चन नूतनः शब्दः श्रूयते Bodylog इति । यदि शब्दकोषः परिशील्येत तर्हि तत्रापि अयं शब्दः द्रष्टुं न शक्यः । एवं तर्हि एतस्य पदस्य कः अर्थः ?

यदा मार्गेषु प्रवाहादिकारणतः जलं सङ्गृहीतं भवति तदा वयं वदामः 'अवरुद्धजलः मार्गः' इति । एवमेव शरीरे अपि जलावरोधः यदा भवति तदा उच्यते यत् तत् शरीरम् अवरुद्धजलम् इति ।

यदा अधिककालं तरणं क्रियते, जलेन क्रीड्यते वा तदा अङ्गुलयः अन्यानि अङ्गानि च वल्युपेताः भवन्ति इत्येतत् भवद्भिः लक्षितं स्यात् खलु ? एतत् किमर्थं भवति इति किम् अवगतम् ?

अस्माकं शरीरे चर्मणः उपरि Sebum नामकं किञ्चन नैसर्गिकतैलं भवति । यदा जलं शरीरं प्रविशति तदा स च तैलांशः अपगतः भवति । एतस्मात् अस्माकं शरीरस्य अन्तः जलं गच्छति । एषा प्रक्रिया उच्यते 'Osmosis' इति ।

शरीरे आवश्यकतातः अपि अधिकप्रमाणेन जलं सङ्गृहीतं भवति इत्यतः चर्मणि वल्यः उत्पद्यन्ते । तस्मात् शरीरे स्फीतता दृश्यते अपि । किन्तु एषा अल्पकालिकी ।



# पृष्टोऽयं भवताम् पृष्टोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### विमानयानेषु कृष्णपेटिकाः



यदा विमानापघातवार्ता श्रूयते तदा वयं प्रायः शृणुमः एव यत् 'कृष्ण-पेटिकायाः' अन्वेषणाय प्रयासः प्रचलति इति । का एषा कृष्णपेटिका नाम ? किं भवति अत्र ?

विमानस्य अपघातस्य स्पष्टकारणस्य अन्वेषणे नितराम् उपकरोति एषा पेटिका । विमानेषु सर्वेषु अपि एतादृशं पेटिकाद्वयं भवति । एका विमानस्य वेगादीनाम् उल्लेखनं करोति निरन्तरम् । काक्पिट्नामके स्थले स्थिता अपरा (सि.वि.सि.नामिका) पेटिका तत्रत्यं समग्रं सम्भाषणं ध्वनिमुद्रितं करोति । ३०-४५निमेषात्मिकाः ध्वनिमुद्रिकाः भवन्ति तयोः पेटिकयोः ।

यद्यपि तयोः पेटिकयोः नाम 'कृष्ण-पेटिका' इति, तथापि तयोः वर्णः भवति शुभ्रः पीतावर्णः, नारङ्गवर्णः वा । अन्येभ्यः पार्थक्येन अभिज्ञानाय एषः वर्णः उप-युज्यते तत्र ।

## अभिवर्ध्यतां ज्ञानशक्तिः

एतस्य मासस्य प्रश्नाः सन्ति सम्मिश्राः ।

१. महाराजेन जयसिंहेन चतस्रः ज्योतिश्शास्त्रीयाः घट्यः (जन्तरमन्तरनामिकाः) निर्मिताः । ताः कुत्र सन्ति ?





२. भारते यत् स्वर्णं प्राप्यते तस्य भूयान् भागः एकस्मात् एव राज्यात् प्राप्यते । तस्य राज्यस्य नाम किम् ?



३. भारते ज्वालामुख्यः कुत्र द्रष्टुं शक्याः ?



४. कस्य राज्यस्य नाम्नः अर्थः भवति नूतनं गृहम् इति ?

(उत्तराणि ७० तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा

अधस्तनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिना वाक्यद्वयेन चित्र-शीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?



MAHANTESH C. MORABAD



NARAYANAMURTHY TATA

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

पुरस्कृता शीर्षिका

'एप्रिल्'मासस्य चित्रशीर्षिकाप्रेषिका -

**महिता महेश**

पी - ३०२, 'एट्रियम्',

२२, कलाक्षेत्रमार्गः,

**चेन्नै - ६०० ०४१।**





**मनसि कल्पितं रूपम्**
**प्रत्यक्षम् अस्त्येव अत्र**

## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. राजस्थाने, मध्यप्रदेशे, उत्तरप्रदेशे, देहल्यां च ।

२. कर्णाटकम् - कोलारसुवर्णखनीतः ।

३. अन्दमाननिकोबारद्वीपसमूहे ।

४. सिक्किमराज्यस्य ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

# परिसरसंरक्षणम्



"तात ! श्वः अस्माकं क्रीडाभ्यासः भविष्यति । किं भवान् तस्य दर्शनाय आगन्तुम् अर्हेत् ?" इति अपृच्छत् प्रकाशः । सः वीणायाः मातुलपुत्रः । वीणा सप्ताहान्तकालं मातुलेन सञ्जयेन सह तिष्ठन्ती यापयति । सञ्जयश्च स्वायत्तसंस्थायां कस्याश्चित् विज्ञानी अस्ति ।

सः पुत्रम् अवदत् – "क्षन्तव्योऽहं वत्स ! श्वः मम बहूनि कार्याणि ! जागतिकपरिसरदिनम् आसन्नम् अस्ति । अतः मया नगरसभाप्रमुखः, अन्ये पुरप्रमुखाः च द्रष्टव्याः सन्ति । अन्तिमस्पर्धादर्शनाय आगमिष्यामि अहम्" इति ।

"जागतिकपरिसरदिनं नाम किं तत् ? कः विशेषः तस्य ?" इति अपृच्छत् वीणा ।

"जूनमासस्य पञ्चमे दिनाङ्के विश्वपरिसरदिनम् आचर्यते । एतस्मिन् दिने शोभायात्राः भविष्यन्ति, विद्यालये स्पर्धाः भवितुम् अर्हन्ति । वृक्षारोपणं, स्वच्छताकरणम् इत्यादयः अपि भवितुम् अर्हन्ति । वीणे ! किं भवती अपि परिसरसंरक्षणक्षेत्रे किमपि कर्तुं शक्नुयात् ?" इति अपृच्छत् सञ्जयः मन्दहासपूर्वकम् ।

"शालाबालिका अहं किं वा कर्तुं शक्नुयाम् ?" इति अपृच्छत् वीणा ।

"भवती अपि बहु कर्तुम् अर्हति । प्लास्टिक्स्यूतानां फलरसबन्धानां च उपयोगस्य निराकरणं कर्तुं शक्यं, यतः तानि परिसरस्य हानिं कल्पयन्ति । कागदानां व्यर्थीकरणस्य निवारणात् अरण्यनाशः निवारयितुं शक्यः । सस्यारोपणद्वारा शुभसमारम्भाः आचरितुं शक्याः । भवन्तः बालाः एव भाविनः देशनिर्मातारः । जगतः हितं भवताम् अधीनम् अस्ति । भाविन्यै जनतायै हरिन्मयस्य जगतः संरक्षणं किं भवद्भिः न चिन्त्यते ?"

"हरिन्मयस्य स्वास्थ्यहेतुकरस्य च परिसरस्य निर्माणाय संरक्षणाय च यथाशक्ति प्रयत्नः निश्चयेन करिष्यते अस्माभिः अपि" इति अवदत् वीणा ।

